काशीकुमारग्रन्थमालाया द्वितीयं पुष्पम्

# विद्वद्वृत्तम्

( द्वितीयः खण्डः )

—(:०:)—

—लेखकः—

म० म० पं० कालीप्रसादशास्त्री

'संस्कृतम्' पत्रसम्पादकः

मूल्यं २) मुद्रे

प्रकाशनतिथिः

विजयदशमी १९९४ विक्रमाब्दः १००० प्रतयः

श्रावणशुक्लद्वितीया २०१६ विक्रमाब्दः १००० प्रतयः

# विद्वद्वृत्तविषयसूची।

( अ )



( उ )



( ए )

(क)



(ख)



(ग)

(ध)



(न)



(प)



(फ)



(ब)

( भ )



( म )

(ल)



[व]

—(:०:)—

# निवेदनम्

विद्वद्वृत्तद्वितीयखण्डस्य द्वितीयं संस्करणं निरीक्ष्य चेतः कथञ्चित प्रसीदत्येव। एवमेवाहमेतत्कार्यालयात् प्रकाशितानां सर्वेषां ग्रन्थानां पुनः प्रकाशनं दिदृक्षामि, यतोऽस्मिन् कार्यालये तेषु बहव उपलभ्यन्तेऽपि नैव।

कदाचिदासन्नविंशतिवर्षेभ्यः पूर्वमयं ग्रन्थः प्रकाशितः। प्रथमे संस्करणे काश्चन त्रुटय आसन् ता निराकृता न वा इति न स्मरामि। कानिचन नामान्यधिकानि अत्रागतानि इत्यवश्यं वक्ष्यामि।

संस्कृतभाषायां लक्षशो नैव, कोटिशो ग्रन्था आसन्। एतेषां लेखका अपि लक्षशो भविष्यन्ति। 'संस्कृतम्' पत्रस्य प्रारम्भसमये अधिकाधिकलेखकानां परिचयोदाहरणसङ्कलनाय मम मतिर्जाता आसीत्। किम्बहुना ममासीदिच्छा यदात्मकालं यावद्विद्यमानानां सर्वेषामुत्कृष्टानां विदुषां तथा लेखकानां परिचया सङ्कल्येरन्, परमत्यधिकसर्वविधव्यस्ततया कारणा-त्रास्य परिचयकोषस्य पूर्तिकरणसौभाग्यमाप्तम्। इदानीं तु जीवनस्य अन्तिमो भागश्चलति अत आशैव नातिष्ठद् अग्रे किमपि नवीनं कार्यं कर्तुम्।

मम जीवने आर्थिकक्लेशः सदा अतिष्ठत्। एतस्मादेव कारणात् उत्तमप्रेसमौविध्यञ्च कदाप्यधिगतम्। उत्तमप्रेसकर्मचार्यभावकारणाद् यादृशं कार्यं कर्तुमासीदुत्साह तच्छांशतोऽपि पूरितं तम्।

अहञ्जानामि यदयं ग्रन्थः कदाचित् कस्मैचिदुपयोगाय नास्ति। एतस्मादेव कारणात् शिक्षाक्षेत्रे न सत्कृतः। अद्यापि संख्यातीता विद्वांसो विद्वद्वृत्तञ्च जानन्ति। अग्रेऽपि कदाचिदियमेव स्थितिः स्थास्यति, यतो हिन्दिभाषायामेव उत्तमानि पुस्तकानि प्रकाशितानि यान्यध्याप्यन्ते। वस्तुत एवादृशो ग्रन्था अधुना हिन्द्यादिभाषायामेव प्रमाणीक्रियन्ते। यदि ममापि संस्कृतेनैव लेख्यमिस्याग्रहो नाभविष्यत तर्हि अयमपि प्रमाणिनोऽभविष्यत। अथापि प्रसन्न एवाहं यल्लोकेन तिरस्कृतोऽपि संस्कृतसेवातो विरतो नाभूवम्। अद्य मम मनसि भावनापि नोदेति यदितः प्रकाशिता ग्रन्थाः समाद्रियेरन एव।

गते संस्करणे कदाचिद् २०-२२ पृष्ठानां भूमिका अभ्यासीत्, परमवशिष्टे पुस्तके स नासीदिति नेह दत्ता। यदि कदाचित्प्राप्स्यते तर्हि तदुपयोगो ग्रन्थान्तरे करिष्यते।

उत्तममुद्रणयन्त्राभावात्, कार्याधिक्याच्च एतस्मिन् संस्करणे त्रुटीनां बाहुल्यं वर्तते, परं पठतामुपकारं करिष्यति यत् उदाहरणानि यथासम्भवमुत्तमान्येव मया दत्तानि। अन्यत्र कालनिर्णयोऽपि क्वचिदेव अशुद्धो भवितुमर्हति।

अस्मिन्निकटे एतत्संस्करणस्योत्तमतायै सामग्री आसीत्, परं तदुपयोग कर्तुं समयञ्च प्राप्तम्। गत ३० वर्षाणां 'संस्कृतम' पत्रस्य प्रारम्भतोऽधुनावधि निरीक्षणमसाध्यं सामासीत् कार्यम्। तत्कस्मिन्नत् स्वर वुद्धिरेव कर्तुं शक्नोति। अन्ये ग्रन्थलेखका यद्

सद्य आगत्येह 'संस्कृतम्' पत्रात् स्वाभिलषितमासादयन्ति, परं मम भाग्ये पुस्तको निरीक्षणाय समयो नास्ति ।

भारतीयविदुषां मयि पक्षपातातिशयः । ते इतः प्रकाशितान् सर्वानपि ग्रन्थान् गृह्णन्ति । एषां संख्या ५०८-६०० तो न्यूना न भवितुमर्हति । अहं तदर्थमेव प्राधान्येन ग्रन्थं प्रकाशयामि । मदीयः कश्चिदपि ग्रन्थ एकसहस्रतो न न्यूनः प्रकाश्यते नाधिकः । तेभ्योऽवशिष्टानि पुस्तकानि शनैः शनैर्निस्सरन्ति । मम यथा अन्यानि सर्वाणि कार्याणि शिथिलानि तथैव ग्रन्थप्रकाशनमपि परितः शिथिलमतः प्रामाणिकं मन्येतैव नैतादृशो ममाग्रहः ।

यथा स्वत्रुटयः सुस्पष्टं सूचिता अतो नाहं कश्चिद् भ्रान्तौ स्थापयामीति ममात्मा प्रसन्नः । एकमन्यदपि प्रसन्नतायाः कारणम्—पूज्यविद्वद्वराणां येषामत्र संग्रहः कृतस्तेषां शुभाशीर्वादः प्रकाश्यते यो ममात्यन्तिकं कल्याणं करिष्यतीति ।

आवेदकः—

पं० कालीप्रसादशास्त्री



जय दुर्गे

# विद्वद्वृत्तम्

( द्वितीयो भागः )



यस्यादनूपुरध्वानैः श्रुतयः प्रतिमानगाः ।
स्पन्दमानं मणिद्वीपे ध्यायेद् दौर्गंमहोऽद्भुतम् ॥
कालीकुमारतनुजः कृष्णादेव्याश्च गर्भजः प्रार्थितः ।
कालीप्रसादशास्त्री विद्वद्वृत्तं तनोत्ययम् ।

## भरद्वाजः

अयं ब्रह्मणः प्रपौत्रोऽङ्गिरामहर्षेः पौत्रो बृहस्पतेश्च पुत्रः । अङ्गिरामहर्षिणा यदा स्वदैवीमीमांसादर्शनस्य रसपादोत्पत्तिपादयोः शाक्तसिद्धान्ताः प्रतिपादितास्तथा अनेनापि स्वकीये शक्तिदर्शने । अस्य शक्तिसूत्रनामा ग्रन्थः ।

## रेणुकाचार्यः

अयमान्ध्रप्रदेशस्य कालिपानगरे जातः। अयमेव रेवण, रेवणसिद्ध, रेवणाराध्य, रेणुकाधीश्वर, रेणुकनामभिः प्रसिद्धोऽस्ति। शिवाचार्यकृत-रेणुकाविजयचम्पूकाव्ये तथा नञ्जाणाचार्यकृतवीरशैवचिन्तामणौ लिखितमस्ति यदगस्त्यो मुनिः समुपदिष्टो रेणुकाचार्येण व्याससूत्राणामुपरि शैववृत्तिं लिखितवान्, यदाधारे पण्डिताराध्येन श्रीकरभाष्यं लिखितम। स स्वभाष्ये वदति—

"अगस्त्यमुनिचन्द्रेण कृतां वैयासिकीं शुभाम्।
सूत्रवृत्तिं समालोक्य कृतं भाष्यं शिवङ्करम्॥"

अयं वीरशैवसम्प्रदायस्य संस्थापकः। अस्यानुयायिनां विचारेऽयं कलियुगारम्भ आसीत्, किन्तु शिवतत्त्वरत्नाकरे, गुरुवंशकाव्यस्य तथा रेणुकाविजयकाव्यस्य तृतीयसर्गे लिखितमस्ति यदेकदा श्रीशङ्कराचार्यः श्रीमल्लिकार्जुनस्य प्रत्यक्षीकरणाय तप आचचार। कियद्दिनानन्तरमाकाशवाणी बभूव यद् यावद्रेणुकाचार्यतश्चन्द्रमौलीश्वरलिङ्गं न प्राप्स्यसि तावत्ते मनोरथसिद्धिर्न भविष्यति। अथ स मलयाचले रेणुकाचार्यतस्तत् प्राप। इदं लिङ्गं श्रूयतेऽधुनाऽपि शृङ्गेरीमठेऽस्ति। अनया कथया रेणुकाचार्यश्चिरञ्जीवी प्रतीयते।

श्रूयतेऽस्य ब्रह्मसूत्रभाष्यमासीत्, किन्तु साम्प्रतं तन्न प्राप्यते जर्मनस्यैकपुस्तकालयस्य पुस्तकसूच्यां रेणुककारिकानामा ग्रन्थो विद्यते। प्रायोऽयमेवास्य भाष्यग्रन्थः।

## विष्णुस्वामी

सार्द्धद्विसहस्रवर्षपूर्वमयोध्यायां विष्णुस्वामी बभूव। अस्मिन् समये प्रसेनजिन्नामाऽऽसीन्महाराजः सूर्यवंश्यः। अयं बौद्धग्रन्थानामप्यासीन्महापण्डितोऽतो हिन्दुबौद्धयोर्मध्ये प्रतिष्ठितो मतः। एकदा दूरदेशस्थः कश्चिद् धनिको बौद्धो दन्तधावनकुण्डस्थबोधिद्रुमस्य श्रूयते दर्शनायायोध्यामुपेतः। तद्दर्शनं कृत्वा स विरक्तोऽभूत्। विष्णुस्वामी तस्य विरागमवलोक्य विरक्तो भूत्वा नौराहीस्थाने तपश्चकार। येन तुष्टो भगवांस्तस्मै दर्शनं ददौ। अनन्तरमयं स्वसम्प्रदायञ्चालितवान्। अस्यानुयायिनोऽधुनाऽप्ययोध्यायां वर्तन्ते केचन।

यद्यपि विष्णुस्वामिनः साम्प्रतं कश्चिद् ग्रन्थो न प्राप्यते तथापि पुण्यपत्तनस्य सर्वदर्शनसंग्रहस्थायां प्रतिदर्शनं प्रवृत्तानां ग्रन्थकाराणां सूच्यां विष्णुस्वामिनो ब्रह्मसूत्रभाष्यं, गीताभाष्यञ्चासीदिति लिखितमस्ति। मेधातिथिना विष्णुस्वामिमतं दायभागे तथा श्रीधरेण श्रीमद्भागवतपूर्वस्कन्धस्य टीकायामुद्धृतम्। सर्वदर्शनसंग्रहस्य रसेश्वरदर्शनप्रकरणे लिखितमस्तीत्थम्—

"विष्णुस्वामिमतानुसारिभिः नृपञ्चास्यशरीरस्य, नित्यत्वोपपादनात् तदुक्तं साकारसिद्धौ—

"सच्चिन्नित्यनिजाचिन्त्यपूर्णानन्दैकविग्रहम्।
नृपञ्चास्यमहं वन्दे श्रीविष्णुस्वामिसम्मतम्॥"

अत्रास्मिन्नेव प्रसङ्गे कश्चिद् गर्भश्रीकान्तमिश्रो विष्णुस्वामिचरणपरिचरणान्तःकरणः कथितः।

## हालः

अयं गाथासप्तशतीनामकप्रसिद्धकाव्यग्रन्थस्य कर्ता। अस्य जन्म विक्रमस्य समये काश्मीरे बभूव। डा० स्मिथस्य विचारे हालः खिस्तस्य ६८ तमे वर्ष आसीत्। अस्य रचनेदृशी

संवाहणसुहरसतोसिएण देन्तेण तुह करे लक्खम।
चलणेन विक्कमाइत्त चरिअं अणुसिक्खिअं तिस्सा॥
संवाहनसुखरसतोषितेन ददना तव करे लाक्षाम (लक्षम्)
चरणेन विक्रमादित्यचरितमनुशिक्षितं तस्याः॥

## कुमारलातः

अयं जैनकविः खिस्तस्य द्वितीये शतके बभूव। अयं "कल्पनामण्डितिका" नामकग्रन्थस्य कर्ता। अयं ग्रन्थः पुरा सूत्रालङ्कारनाम्ना प्रसिद्ध आसीद् यस्य कर्ताऽश्वघोषः ख्यातः किन्तु डाक्टर ल्यूडर्सेन यदा कल्पनामण्डितिकायाः सम्पादनं कृतं तदा तेन साधितं यदस्य ग्रन्थस्य कर्ता कुमारलातः। अश्वघोषस्य सूत्रालङ्कारो बौद्धसिद्धान्तप्रतिपादको भविष्यति कश्चिदन्यो गद्यपद्यमिश्रित इति।

## रामिलसोमिलौ

इमौ द्वावपि कवी खिस्तस्य द्वितीयशतकपूर्वार्द्धे आस्ताम्। अनयोः "शूद्रककथा" नामको ग्रन्थः श्रूयते। अयं

शूद्रको मृच्छकटिककर्ता न. किन्तु स्कन्दपुराणान्तर्गतकुमारिको खण्डे स्मृतः १११ शकाब्दे वर्तमानः, सिपूरुकनामकराजमन्त्रिणा हन्ता ।

## पुलिनः

अयं ख्रिस्तस्य सप्तमशतकोत्तरार्द्ध आसीत् । अस्य पिता कादम्बर्याद्यनेकग्रन्थकर्ता बाणभट्टः । अनेन स्वपितुर्महाप्रस्थानानन्तरं कादम्बर्या उत्तरार्द्धो रचितः । डा० ब्यूलरेणास्य नाम "भूषणभट्ट" इत्युक्तम्, किन्तु धनपालः तिलकमञ्जर्यामस्य नाम पुलिन्ध्र इति वदति, यथा—

केवलोऽपि स्फुरन् बाणः, करोति विमदान् कवीन् ।
किं पुनः क्लृप्तसन्धानः, पुलिन्ध्रः कृतसन्निधिः ॥

अयमेव पुलिन्दभट्टनाम्नाऽपि प्रसिद्धः । अस्य रचनेदृशी—

याते दिवं पितरि तद्वचसैव सार्द्धं,
विच्छेदमाप भुवि यस्तु कथाप्रबन्धः ।
दुःखं सतां तदसमाप्तिकृतं विलोक्य,
प्रारब्ध एष च मया न कवित्वदर्पात् ॥
कादम्बरीरसभरेण समस्त एव
मत्तो न किञ्चिदपि चेतयते जनोऽयम् ।
भीतोऽस्मि यन्न रसवर्णविवर्जितेन,
तच्छेषमात्मवचसाप्यनुसन्दधानः ॥

## उद्योतकरः

अयं ख्रिस्तस्य सप्तम्यां शताब्द्यां बभूव । अस्य जन्मस्थानं कुत्रासीदिति न ज्ञायते । अनेन गौतमसूत्राणामुपरि वार्तिकलेखनं कृतम् ।

## महेन्द्रविक्रमवर्मा

अयं तेलगुप्रान्तीयः पल्लवनरेशः। अस्य पिता सिंह-विष्णुः। अनेन मतविलासनामकं प्रहसनं निर्मितम्। अस्यैव सभायां महाकविर्भारविरासीत्। अयं ख्रिस्तस्य सप्तम्यां शताब्द्यामासीत्। अयं स्वविषये मतविलास इत्थं वदति—

"भवति श्रूयताम्। पल्लवकुलतिलकचरणिमण्डलकुलपर्वतस्य, श्रीमहिमानुरूपदानविभूतिपरिभूतभूतराजस्य श्रीसिंहविष्णुवर्मणः पुत्रः शत्रुषड्वर्गनिग्रहपरः परहितपरतन्त्रतया महाभूतसधर्मा महाराजश्रीमहेन्द्रविक्रमवर्मा नाम"।

## जिनेन्द्रबुद्धि

अयं ख्रिस्तस्य सप्तम्याः शताब्द्याः पूर्वभाग आसीत्। अस्य न्यासग्रन्थो माघेन शिशुपालवधस्य द्वितीये सर्गे स्मृतोऽस्मिन् श्लोके—

अनुत्सूत्रपदन्यासा, सद्वृत्तिः सन्निबन्धना।
शब्दविद्येव नो भाति, राजनीतिरपस्पशा॥

केचिद् वदन्ति यदयं प्रचण्डो बौद्धविद्वान् षष्ठ्यां शताब्द्यामासीत् किन्त्वियं वार्ता सत्या न प्रतीयते, यतो ६९५ ईसाब्दे व्याकरणग्रन्थानां सूचीनिर्माणावसरे प्रसिद्धचीनयात्रिणेत्सिङ्गेनास्य चर्चा न कृता। अनेन स्वकीये न्यासग्रन्थे कुणि, चुल्लि, नल्लूरादिविदुषां न्यासग्रन्थकर्तॄणामुल्लेखोऽकारि।

## शार्ङ्गधर

अयं नागरजातीयो गुर्जरदेशीयः ख्रिस्तस्य सप्तमे शतकेऽभूत्। अस्य पिता देवराजो, गुरुर्यतिपतिवैकुण्ठाश्रमः। अयं सुकवी राजवैद्यस्त्रिशतीनामकस्य वैद्यककाव्यस्य कर्ता यस्य टीका वल्लभदेवेनाकारि। अयं स्वविषये वदति—

अद्वैताद्वधिगाहनादविरतं विश्वस्तताप्रत्रयः,
स्वान्ताविष्कृतनित्यनिर्मलचिदानन्दप्रबोधोदयः।
वैकुण्ठाश्रमसंज्ञया यतिपतिर्नः स्याश्रमस्यास्पदं,
कस्याय निगमान्तशास्त्रविलसत्कान्तारकण्ठीरवः॥

सुधीरभून् संसदि भूपतीनां, सम्मानभाङ् नागरवंशजन्मा।
दोषज्ञमान्यः सुकविः कलावान्, दयानिधान भुवि देवराजः॥
तस्यात्मजः शार्ङ्गधरस्त्रिलोकीपतिं त्रिनेत्रं त्रिपुरान्तं शश्वत्।
ध्यायन्निमां वैद्यमुदे त्रिदोष-ज्वरच्छिदे च त्रिशतीञ्चकार॥

आयुर्वेदमहामण्डलस्य जयन्तीपुस्तकेऽयं शार्ङ्गधरसंहितायाः कर्ता, सोऽपि वैद्यात् प्राचीनो मतः। संहिताकर्ता शार्ङ्गधरो रणथम्भौरनृपतेर्हम्मीरदेवस्य सभायामासीत् ख्रिस्तस्य चतुर्दशे शतके। स आसीच्चन्दवरदाईवंशजो भाटोऽयञ्च नागर ब्राह्मणः। यदि सोऽप्यस्मात् प्राचीनः शार्ङ्गधरो जयन्तीपुस्तककारैरुच्यते तर्हि सोऽपि ख्रिस्तस्याष्टमे शतके उत्पन्नः। ततः प्राचीनोऽयमेव शार्ङ्गधरः ख्रिस्तस्य सप्तमे शतके भवितुमर्हति। त्रिशतीटीकाकारो वल्लभदेवः ख्रिस्तस्यैकादशे शतके जातः, कथन्तर्हि चतुर्दशशतके समुत्पन्नस्य शार्ङ्गधरस्य टीकाकारो भवितुमर्हति ?

## मूलदेवः

अयं काश्मीरदेशीयः ख्रिस्तस्याष्टम्यां शताब्द्यां बभूव। अयमाचार्यश्चौरशास्त्रस्य। अस्य "चौरशास्त्र' नामको ग्रन्थः प्राप्यते। अनेन शूद्रकस्य प्रशंसायामयं श्लोकोऽलेखि—

शूद्रकेणासकृज्जित्वा स्वच्छया खड्गधारया।
जगद् भूयोऽप्यवष्टब्धं, वाचा च स्वार्चितार्थया॥

## पीरोजशाह

अयं दस्तूरपीरोजशाहनाम्ना प्रख्यातः पारसीकधर्मगुरुः। ख्रिस्तस्य सप्तम्यां शताब्द्यां मुसल्माना ईरानमाक्रान्तवन्तः। एभिः तिरस्कृताः पारसीका भारतस्य पश्चिमदिग्वर्तिनि सञ्जाणबन्दरे समागताः। सञ्जाणस्याधिपतिना राणायादवेन तेभ्यो भूमिप्रदानसमये तद्धस्ताङ्कितं ताम्रपत्रं गृहीतं, तदधुनाऽपि बड़ौदासंग्रहालये सुरक्षितं वर्तते। राणायादवमहोदयेन पृष्टः पारसीकगुरुः स्वधर्माचाराद्वबोधकान् षोडशश्लोकान् यान् समर्पयामास तस्मै तेऽधुनाऽपि प्राप्यन्ते। अस्य रचनेदृशी—

सूर्यं ध्यायन्ति ये वै हुतवहमनिलं भूमिमाकाशमाद्यं,
तोयेशं पञ्चतत्त्वं त्रिभुवनसदनं न्यासमन्त्रैस्त्रिसन्ध्यम्।
श्रीहाभिज्द सुरेशं बहुगुणगरिमाणं तमेवं कृपालुं,
गौरा घोराः सुवीरा बहुबलनिलयास्ते वयं पारसीकाः॥

येषामेषाङ्गना वै ऋतुसमयदिनात्, सप्तरात्रैर्भवेयुः ।
पूताः सूनाश्च मासे प्रसवनसमयात् देहशुद्धास्तथैव ॥
रम्या चारेण गौरा नवकनकनिभा वीर्यवत्यो बलिष्ठाः ।
पूनास्थानोऽपि नित्यं विकसितवदनास्ते वयं पारसीकाः ॥
वेश्यास्त्रीभिर्न सङ्गः पितृषु शुचियुतं श्राद्धमग्नौ च होमो ।
नो मांसं यज्ञबाह्यं स्वपिति महितले, सर्वदा पुष्पनारी ॥
वैवाहो लग्नशुद्धिर्नहि भवति शुचिर्भर्तृहीना पुरन्ध्री ।
येषामाचार एव प्रतिदिनमुदितस्ते वयं पारसीकाः ॥

## हरिचन्द्रः

अयं जैनकविः ख्रिस्तस्याष्टमे कशत आसीत् । अस्य "धर्मशर्माभ्युदय" नामकं महाकाव्यं वर्तते । अयं सुबन्ध्वादिश्लोके चतुर्थः कविः केनचिन्मतः 'हरिः हरिचन्द्रोऽपि हृदयम्' इति । अस्य रचनादशी—

अवाप्य सर्वाधरमौलिमैत्रीं छत्रद्युतिं लम्भति यत्र वृत्ते ।
धत्ते स्वभुतेजितशातकुम्भकुम्भप्रभां काञ्चनकाञ्चनाद्रिः ॥

## भौमभट्टः ।

अयं काश्मीरदेशीयः ख्रिस्तस्याष्टमे शतक आसीत् । अस्य राघवार्जुनीयनामकं द्विसन्धानं महाकाव्यं प्राप्यते । अस्मिन् काव्ये रामचन्द्रार्जुनयोः कथा सर्वेषु श्लोकेषु प्राप्यते । इदं वैयाकरणकाव्येषु परिगणनीयम् ।

## वसुगुप्तः ।

अयं ख्रिस्तस्य नवम्यां शताब्द्यां बभूव । स्पन्दनसम्प्रदायाचार्येष्वस्य प्रसिद्धिः । अनेन स्पन्दनशास्त्रनामा ग्रन्थोऽलेखि । अमुमेव ग्रन्थमाश्रित्यावन्तिवर्मणा स्पन्दनकारिका लिखिताः ।

## अमोघवर्षः ।

अयं दाक्षिणात्यो भूपालः । अनेन कविराजमार्गनामकस्य ग्रंथस्य रचना दण्डिनः काव्यादर्शाधारेऽकारीति केचित् वदन्ति. किन्तु नेयं सत्या वार्ता, कविराजमार्गस्य कर्ताऽमोघवर्षाऽभितो नृपतुङ्गनामकः कविः । अयं तुङ्गीनादपरः । अमोघवर्षः ख्रिस्तस्य नवम्यां शताब्द्यामासीत् ।

## अनन्तदेवः

अयं कातीयश्रौतसूत्रभाष्यकारः स्वभाष्ये स्वविषय इत्थं वदति— 'इति श्रीयज्ञविद्याकौमुदीकजानाथपञ्चाग्निचिच्चतुर्दशकृत्व-सम्राट् स्थपति-महायाज्ञिकश्रीअनन्तकृते कात्यायनसूत्रभाष्ये पञ्चविंशोऽध्यायः' । अस्य गुरुः केशवामृतौ वासुदेवसरस्वती । अयं वासुदेवो युधिष्ठिरविजयकाव्यकर्ता ख्रिस्तस्य ८४० शतक आसीदतोऽनन्तदेवस्याप्ययमेव समयः । अनन्तदेवस्य पिता द्वादशवाजपेयपञ्चाग्निचिदेकोनाशीतिसोमयज्ञात्रिसौत्रामणीनां कर्ता सम्राट् स्थपतिर्वाचस्पतिः । अनन्तदेवः स्वभाष्योपक्रम इत्थं वदति—

'भवाग्निशोषणोऽगस्त्यान् केशवामृतयोगिनः ।
प्राहयाञ्चक्रिरे पूर्वविद्यायाः सारतां मया ॥
दुर्दान्ताश्चेतसो दोषा वेदान्तैर्ये व्यजीगमन् ।
तथा पूर्वगुरून्नौमि वासुदेवसरस्वतीन् ॥
सरहस्येत्र मीमांसा यैर्दृष्टा परमार्थतः ।
रविसंख्यैरभिषिक्तो वाजपेयैः तथाग्निचित् ॥
एकोनाशीतिं सोमान् य ईजे सौत्रामणिप्रथम् ।
सम्राजो वंशजः सम्राट् स्थपतिर्याज्ञिकः सुधीः,
सम्राट् वाचस्पतिर्यस्य जनको ज्ञानसंभृतः ॥'

## आनन्दबोधभट्टः

अयं कण्वसंहिताया उपरि वेदमन्त्रभाष्यं नाम भाष्यमकरोत् । अस्य पिता जातवेदभट्ट, तथा गुरुर्वासुदेवपुरीतिनामा सन्यासी । अयं वासुदेवो युधिष्ठिरविजयस्य तथा वासुदेवविजयस्य महाकाव्यस्य कर्ता प्रतीयते । वासुदेवः स्वपरिचये वदति-

'वेदानामध्यायी, भारतगुरुरभवद् ब्राह्मणानामध्यायी' ।

भारतगुरुरित्यत्र जगद्गुरुत्वं मन्यते चेत्तदाऽऽश्रमश्रैष्ठ्यादस्य कवेः सन्यासधर्मावलम्बनं स्पष्टं प्रतिभाति । अयं स्वं वेदाध्यायिनं तु वदत्येवातो वासुदेवे आनन्दबोधस्य गुरुत्वापातो नासम्भवः प्रतीयते । वासुदेवः ८४० खिस्ताब्द आसीदतः आनन्दबोधभट्टस्याप्ययमेव समयो ज्ञेयः । आनन्दबोधः स्वभाष्ये स्वपरिचयमित्थं ददाति—

"इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीवासुदेवपुरीपूज्यपादपरमकारुणिकासादितश्रीकृष्णभक्तिसाम्राज्येन श्रीमज्जात-

वेदभट्टोपाध्यायस्य सूनुना चतुर्वेदश्रीमदानन्दबोधभट्टोपाध्यायेन विरचिते कण्ववेदमन्त्रभाष्यसंग्रहे चत्वारिंशोऽध्यायः"।

वेदमन्त्रभाष्यस्य ३० अध्यायपर्यन्तं भाष्यं पूनापुस्तकालये, २० अध्यायतः ३६ पर्यन्तं पञ्जाबविश्वविद्यालयपुस्तकालये चाप्रकाशितं वर्तते। केवलं ४० तमाध्यायस्य भाष्यं पुण्यपत्तनस्थानन्दाश्रमपुस्तकालयेन प्रकाशितमधुना प्राप्यते, श्रीधरशास्त्रीति वदति शुक्लयजुर्वेदवाङ्मयपरिचये।

## अपरादित्यदेवः

अयं विद्याधरवंशजे शिलाहारकुले जीमूतवाहनस्य शाखायामुत्पन्नः कोंकणप्रान्तीय आसीत्। अयं ख्रिस्तस्य नवमे शतक आसीदिति श्रीधरशास्त्रिविचारः। अयं सम्राट् याज्ञवल्क्यस्मृतौ अपरार्कनाम्न्याष्टीकायाः कर्ता स्वविषये वदति—

"राष्ट्री यस्य निरङ्कुशा वसुमती कोशः सपक्षः सुहृ-
च्छक्तो दुर्गमनागमं शतपरा सेना हिता मन्त्रिणः।
शास्त्रार्थामृतचर्वणार्पितमतिर्विश्वैकनाथोऽप्यसौ,
शौर्यौदार्ययशोधनोऽस्मुमपरादित्यो निबन्धं व्यधात्॥"

"इति श्रीविद्याधरवंशप्रभवश्रीशिलाहारनरेन्द्रजीमूतवाहनान्वयप्रसूतश्रीमदपरादित्यदेवविरचिते याज्ञवल्कीयधर्मशास्त्रनिबन्धेऽपरार्के प्रायश्चित्ताऽध्यायः"।

## नेमादित्यः

अयं विद्वान् नच चम्पू—मदालसाचम्पू—ग्रन्थयोस्तथा नवसारीनगरे प्राप्तस्य एपिग्राफिका इण्डिकाया ६ भागस्य २३ पृष्ठे

काशितश्चेन्द्रराजशिलालेखस्य लेखकस्य त्रिविक्रमभट्टस्य पिता । अयमेव देवादित्यनामापि । इन्द्रराजो राष्ट्रकूटवंशीयस्य कृष्ण-नृपतेर्द्वितीयपौत्रजगत्तुङ्गस्य लक्ष्मीगर्भजः पुत्रः । त्रिविक्रमः स्वपितु प्रशस्तौ वदति—

तेषां वंशे विदितयशसां श्रीधरस्यात्मजोऽभूत् ।
देवादित्यः स्वमतिविकसद्वेदविद्याविवेकः ॥
उत्कल्लोला दिशि दिशि जनाः कीर्तिपीयूषसिन्धुं ।
यद्यापि श्रवणपुटकैः कूणिताक्षाः पिबन्ति ॥

नेमादित्यः ख्रिस्तस्य दशम्यां शताब्द्यामासीत् ।

## रविचन्द्रः

अयं ख्रिस्तस्य दशम्यां शताब्द्यां बभूव । अनेनामरुक-शतकस्य टीकाऽकारि । भ्रान्तोऽयं विद्वान् भगवच्छङ्कराचार्यकृतममरुकशतकं स्वीकरोत्यतस्तस्य टीका शान्तिरसे लिखिता ।

## चण्डपालः

अयं त्रिविक्रमभट्टरचितस्य नलचम्पूग्रन्थस्य टीकाकारः ख्रिस्तस्यैकादश्यां शताब्द्यामासीत् । अस्याष्टीकाया नामास्ति विषमपदप्रकाशः । त्रिविक्रमभट्टोऽनेन निम्नाङ्कितश्लोकेन लोके यमुनात्रिविक्रमनामा तथैवोक्तो यथा माघो घण्टामाघस्तथा रत्नाकरस्तालरत्नाकरः—

उदयगिरिगतायां प्राक् प्रभापाण्डुतायाम्—
अनुसरति निशीथे शृङ्गमस्ताचलस्य ।
जयति किमपि तेजः साम्प्रतं व्योममध्ये,
सलिलमिव विभिन्नं जाह्नवं यामुनञ्च ।।

इमामपूर्वामुक्तिमधीत्य चण्डपालोऽत्रैव वदतीत्थम्—

प्राच्याद् विष्णुपदीहेतोरपूर्वोऽयं त्रिविक्रमः ।
निर्ममे विमले व्योम्नि यत्पदं यमुनामपि ॥

## गुणविजयगणिः

अयं जैनः । अनेन त्रिविक्रमभट्टकृतनलचम्पूग्रन्थस्य टीकाऽकारि । अयं ख्रिस्तस्यैकादश्याः शताब्द्या आरम्भ आसीत् । अस्याष्टीकाया लेखनसमये जैनकविश्चन्द्रपालोऽप्यासीत् सहायकः । आभ्यामेव बाणभट्टकृतं मुकुटताड़ितकनाटकमसाधि तत्रत्यं श्लोकमेकं गृहीत्वाऽन्यथा पुरा न कोऽपि जानातिस्म यद् बाणस्यायमपि ग्रन्थोऽस्ति । स चायमुद्धृतः श्लोकः—

आशाः प्रोज्झितदिग्गजा इव, गुहाः प्रध्वस्तसिंहा इव ।
द्रोण्यः कृत्तमहाद्रुमा इव, भुवः प्रोद्भूतशैला इव ॥
विश्वाणाः क्षयकालरिक्तसकलत्रैलोक्यकष्टां दशां,
जाताः क्षीणमहारथाः कुरुपतेर्देवस्य शून्याः सभाः ।

## वादीन्द्रः

वादीन्द्रस्य महाविद्याविडम्बननामा ग्रन्थः प्राप्यते । अयं ग्रन्थः प्रत्यग्रपूर्वगयं । नयनप्रसादिन्यां कतिपयस्थलेषु स्मृतः । अयं विद्वान् सिंघड़नृपतेर्धर्माध्यक्ष आसीदिति गायकवाड़-ओरियन्टलसीरीजतः प्रकाशितायाः महाविद्याविडम्बनभूमिकाया अवलोकनात् प्रतीयते । अयं ख्रिस्तस्य द्वादश्यां शताब्द्यामासीत् ।

## मदनपालः

अस्य पिता साहसाङ्कविजेता कन्नौजाधिपतिश्चन्द्रदेवः। अनेन १०९७ ईसाब्दपर्यन्तं कन्नौजशासनमकारि। मदनपालेन मदननिघण्टुनामा वैद्यकग्रन्थो व्यरचि। अयं तत्र वदति—

जयति मदनपालः सर्वविद्याविशालः,
कुलसरसिजमित्रः धर्मकर्मे पवित्रः।
सुजननिकरसालस्तुष्टगोपालबालः,
रुचिरतरचरित्रश्चारुचातुर्यचित्रः॥

## माहेश्वरः

अयं कन्नौजाधिपतेर्मदनपालमहीपतेः सभ्यः। अस्य पिता ब्रह्मेश्वरः, पितामहश्च केशवः। केशवस्य पितृव्यो वैद्यवरो महेशः, महेशस्य पिता दामोदरः पितामहः श्रीकृष्णः, प्रपितामहश्चरक-संहितायाष्टीकाकारो हरिश्चन्द्रः। महेश्वरेणेत्थमेव स्वकये विश्वकोशे स्वकीयः परिचयोऽदायि। विलसनसाहबस्य विचारे ११११ ईसाब्दे महेश्वरेण विश्वकोषोऽलेखि।

विकोषलेखनसमये महेश्वरेण कविराज, भोगीन्द्र, कात्यायन, साहसाङ्क, वाचस्पति, व्याडि, विश्वरूप, अमरसिंह, मङ्गल, शुभाङ्क, गोपालित, भाण्डवादीनां कोषैः सहायताऽधिगता। हेमचन्द्राचार्येणाभिधानचिन्तामणेर्नानार्थभागो विश्वकोशादेव गृहीतः। महेश्वरस्य साहसाङ्कचरितनामाऽन्योऽप्येको ग्रन्थः प्राप्यते। अयं विश्वकोशान्ते स्वं वैद्यराजशेखरं, कविराजपरमेश्वरस्य वदति।

## हरिभद्रसूरिः

अयं जैनविद्वान् ख्रिस्तस्य द्वादश्याः शताब्द्या उत्तरार्द्धं अवश्यमासीत् । अस्य सुप्रसिद्धो ग्रन्थः षड्दर्शनसमुच्चयः। अस्य ग्रन्थस्य टीका गुणरत्ननामकजैनविदुषा १४०६ ख्रिताब्दे लिखिता।

## चाण्डूपण्डितः

अयं १२६६ खिस्ताब्दे गुर्जरस्य धोलकाग्रामे बभूव । अनेन श्रीहर्षकृतनैषधरितस्य टीकाऽलेखि । अयं स्वपरिचयमित्थं ददाति ।

श्रीमानालिगपण्डितः स्वसमयाऽऽविभूतसर्वाश्रम—
श्चाण्डूपण्डितसंज्ञितं प्रसुषुवे श्रीगौरिदेवी च यम् ।
बुद्ध्वा श्रीमुनिदेवसंज्ञिविबुधात् काव्यं नवं नैषधं,
द्वात्रिंशे च सवर्णने वितरणं, सर्गे च चक्रे क्रमात् ॥

चाण्डूपण्डितः स्वटीकालेखनकारणमित्थं वदति—

टीकां यद्यपि सोपपत्तिरचनां, विद्याधरो निर्ममे।
श्रीहर्षस्य तथापि न त्यजति सा, गम्भीरतां भारती ॥
दिक्कूलङ्कषतां गतैर्जलधरैरुद्गृह्यमाणं मुहुः ।
पारावारमपारमम्बु किमिह स्याज्जानुदघ्नं क्वचित् ॥

अयं टीकारम्भे वदति यदुदयनाचार्येण सहैव हीरस्य शास्त्रार्थो भवतिस्म, यस्मिन् विजेतोदयनः श्रीहर्षेण पराजितः, यथा—"श्रीहर्षः स्वपितुर्विजेतुरुदयनस्य कृतीः खण्डनखण्डखाद्यनामकग्रन्थेनाखण्डयत्" ।

## अर्जुनवर्मदेवः

अयं धारापतेर्भोजराजस्य वंशे बभूव । अयं खिस्तस्य त्रयोदश्याः शताब्द्या उत्तरार्द्ध आसीत् । अनेन रसिकसञ्जीवनी नाम्नी टीकाऽमरुककवेः शतके लिखिता । अयममरुकस्य प्रशस्तौ वदति—

अमरुककवित्वडमरुक—नादेन विनिन्हुता न सञ्चरति ।
शृङ्गारभणितिरन्या, धन्यानां श्रवणविवरेषु ॥

## आनन्दपूर्णः

अयं खिस्तस्य चतुर्दश्याः शताब्द्याः पूर्वभाग आसीत् । अनेन महाकविश्रीहर्षरचितस्य खण्डनखण्डखाद्यस्य विद्यासागरी नाम्नी टीकाऽकारि ।

## प्रत्यग्रूपभगवान्

अस्यापरं नाम प्रत्यक्स्वरूपोऽपि विद्यते । अस्य गुरुः प्रत्यक्प्रकाशनामा सन्यासी । अनेन भवभूत्यपरनाम्न उम्बेकस्य चर्या स्वरचितनयनप्रसादिन्यामकारि । नयनप्रसादिनी चित्सुखाचार्यकृत—तत्वदीपिकायाष्टीका वर्तते । अयं खिस्तस्य त्रयोदश्यां शताब्द्यामुत्पन्नः अस्य ग्रन्था इण्डिया आफिसेन प्रतिलिपीकृताः १४६० ईसाब्दे ।

## भवदेवमिश्रः ।

अयमासीन्मैथिलब्राह्मणः । अस्य पिता कृष्णदेवः । अनेन रुद्रीतिनाम्ना ख्यातस्य षडङ्गस्य भाष्यं पटनानगरे गङ्गातीरेऽकारि । अस्य गुरुर्भवदेवठक्कुरः । षडङ्गभाष्यारम्भे भवदेवः स्वपरिचयमित्थं ददाति ।

'भवदेवगुरोर्नत्वा पदपङ्केरुहद्वयम् ।
भवदेवः षडङ्गस्य व्याख्यां प्रकुरुतेऽधुना ॥
उवटादिभिरुत्कृष्टैः पण्डितैः स्वगुरुक्रमात् ।
या व्याख्या कल्पिता प्रायस्तामेव कल्पयाम्यहम् ॥

श्रूयते काशीक्विन्सकालेजस्य पुस्तकालयेऽस्य भाष्यस्य कश्चिद्देशोऽधुनाऽपि प्राप्यते भवदेवः षडङ्गभाष्यस्य सप्तमाध्यायसमाप्तौ स्वपरिचयमित्थं ददाति—

"इति मैथिलसन्मिश्रश्रीकृष्णदेवतनयमहामहोपाध्यायसठक्कुरश्रीभवदेवप्रियशिष्यमहामहोपाध्यायाभिनयाचार्यसन्मिश्रभवदेवकृतायां संहिताव्याख्यारत्नमालायां सप्तमाध्यायव्याख्यारत्नम्" । एवञ्च—"श्रीभवदेवपण्डितकविर्गङ्गातीरे पट्टने व्याख्यानं कुरुते" । अयं खिस्तस्य १२ शतक आसीत् ।

## ८. यज्ञाचार्यः ।

अयं तुङ्गभद्रातटवर्तमाने पम्पानगरे जातः । अस्य पिता मायणः, माता श्रीमती भ्राता माधवापरनामा विद्यारण्यस्वामी, गुरुश्च विद्यातीर्थः । अयं विजयनगराधिपतेः बुक्कस्य सभायामासीत् । अनेन चतुर्णां वेदानां भाष्यमकारि कण्वसंहितायाश्च । अनन्ताचार्येण कण्वसंहितायाः सायणकृतभाष्यस्य पूर्वार्द्ध एव

दृष्टोऽत्र उत्तरार्द्धो रचितः। अस्मिन् भाष्ये 'माधवीये वेदार्थप्रकाशे' इति वाक्यमधीत्यानन्ताचार्यः स्वीकरोति यदस्य भाष्यस्य कर्ता माधवाचार्यो, न सायणाचार्य इति। कण्वसंहिताया वेददीपनामके उत्तराभाष्ये स वदति—

'अथ ख्य नाकिण्व गाखीयसंहितापूर्वविंशतिः।
माधवाचार्यवर्येण स्पष्टीकृत्य न चोत्तरा॥

शुक्लयजुर्वेदवाङ्मयपरिचयकर्ता श्रीधरशास्त्री वदति यद् धुमसर-राज्यान्तर्गतप्रतापलक्ष्मणपुरवासिनः कण्वशाखीयस्य गञ्जामप्रान्तीय—आरका—पण्डितयोर्ड—हाईस्कूल—सीनियराध्यापकस्य पं० चन्द्रशेखरब्राह्मणस्य गृहेऽधुनाऽपि सायणाचार्यकृतभाष्योत्तरार्द्धो यन्त्रे उत्कललिप्यां लिखितः। अत्र माधवाचार्येण लिखितमिदं भाष्यमिति नास्ति सायणाचार्येण ज्येष्ठभ्रातुर्माधवस्य स्वभाष्ये ससादरपर्वकमुक्तवाक्येन स्मरणमकारीत्यतो भ्रान्तोऽनन्ताचार्यः सायणाचार्यो माधवाचार्यप्रेरितेन हरिहरापरनामकेन बुक्कनृपतिना आज्ञाप्तो भाष्यमलिखदिति वेदार्थप्रकाशषष्ठाध्यायान्तावलोकनात् प्रतीयते, यथा—

"इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे मध्यन्दिनशतपथब्राह्मणभाष्ये प्रथमखण्डे षष्ठोऽध्यायः समाप्तः'।

सायणाचार्योऽस्य कथनस्य पुष्टिं ऋग्वेदभाष्योपक्रमस्य द्वाभ्यां श्लोकाभ्यामित्थं करोति—

"स प्राह नृपतिं राजन् सायणाचार्यो ममानुजः।
सर्वं वेत्त्येष वेदानां व्याख्यातृत्वेन युज्यताम् ॥
इत्युक्तो माधवार्येण वीरबुक्कमहीपतिः।
अन्वगात् सायणाचार्यो वेदार्थस्य प्रकाशने" ॥

अयं सायणाचार्यः १३७२ ख्रिस्ताब्दे विजयनगर आसीत्।

## वीसलदेवः

अयमजमेराधिपतेः पृथ्वीराजस्य पितामहः पुत्रश्च सोमेश्वरदेवस्य। अयं चतुर्थवीसलदेवोपनामा विग्रहराजाभिधो हरकेलिनाटकस्य कर्ता। अस्य सभायाः कविः सोमेश्वरो 'ललितविग्रहराज' नाटककर्ता वीसलदेवस्य सरस्वतीमन्दिरे नाटकद्वयमिदं प्रस्तरलिखितमासीत। साम्प्रतं तस्य मन्दिरस्य स्थाने "ढाई दिन का झोपड़ा", नामको मस्जिदस्ति वर्तते। अयं १२२१ विक्रमाब्द आसीत्।

## पुरुषोत्तमदेवः

अयं ख्रिस्तस्य २ शताब्द्यामासीत्। पाणिनिकृताष्टाध्याय्या वैदिकसूत्राणि विसृज्यावशिष्टसूत्रेषु वृत्तिमयं लिखितवान् भाषावृत्तनाम्नीम् तत्रैकत्रायं वदति 'वैदिकप्रयोगानर्थिनो लक्ष्मणसेनस्य राज्ञ आज्ञया प्रकृते कर्मणि प्रसृजन् वृत्तेर्लघुतायां हेतुमाह। अनेन वाक्येन ज्ञायते यदयमासील्लक्ष्मणसेनस्य नदियानृपतेः सभायाम्।

## सोमेश्वरदेवः

अस्य पिता, कुमारो माता, लक्ष्मीदेवी, ज्येष्ठो भ्राता महादेवो, लघुश्च विजयः। अयं सुरथोत्सवमहाकाव्य, रामशतक, काव्य

प्रकाशटीका, उन्मत्तराघवनाटक, कीर्तिकौमुदीनां तथा शिलोत्कीर्तितबहुप्रशस्तीनां रचयिता अस्य रचनेदृशी—

दृप्यद्भुजाः क्षितिभुजः श्रियमर्जयन्ति ।
नीत्या समुन्नयति मन्त्रिजनः पुनस्ताम् ॥
रत्नावलीं जलधयो जनयन्ति किन्तु,
संस्कारमत्र मणिकारगणाः करोति ॥
वृत्तिच्छेदविधौ द्विजातिमरणे स्वामिग्रहे गोग्रहे,
सम्प्राप्ते शरणे कलत्रहरणे मित्रापदां वारणे ।
आर्तत्राणपरायणैकमनसां येषां न शस्त्रग्रहं-
स्तानालोक्य विलोकितुं मृगयते सूर्योऽपि सूर्यान्तरम् ॥
मासान्मांसलपाटलापरिमललव्यालोलरोलम्बतः,
प्राप्य प्रौढिमिमां समीर ! महतीं हन्त ! त्वया किं कृतम् ?
सूर्याचन्द्रमसौ निरस्ततमसौ दूरं तिरस्कृत्य यत् ,
पादस्पर्शसहं विहायसि रजः स्थाने तयोः स्थापितम् ॥
प्रावृट्काले पयोराशिः कथं गर्जनवर्जितः ।
अन्तःसुप्तजगन्नाथनिद्राभङ्गभयादिव ॥
येनागच्छन्ममाख्यातो येनानीतश्च मे पतिः ।
प्रथमं सखि ! कः पूज्यः किं काकः किं क्रमेलकः ॥

## हेमचन्द्रसूरिः

राजशेखरसूरिकृते प्राकृत—द्व्याश्रयकाव्ये लिखितमस्ति यद्धेमचन्द्रसूरिः पुरा प्रद्युम्ननामा राजसचिव आसीत् । कारणवशादनेन स्त्रीत्यागोऽकारि । अभयदेवसूरेः सन्यासदीक्षां गृहीत्वा जैनधर्मप्रचाराय तीर्थयात्राव्याजेन भारतयात्राऽकारि ।

विजयसिंह—चन्द्रसूरिभ्यामस्य प्रशंसा स्वग्रन्थेषु परमा कृता। अस्यैकं पुस्तकं तेनलिखितं तालपत्रेषु साम्प्रतमपि खम्भाते प्राप्यते। अत्रास्य लेखनकालः ११६४ विक्रमाब्दो लिखितो वर्तते-ऽतो हेमचन्द्रसूरिणोऽप्ययमेव समयो ज्ञेयः। एतल्लिखितविशेषावश्यकविवरणस्य द्वितीयः खण्डो जैसलमेरस्य भाण्डागारे विद्यते। अस्येमे ग्रन्था:—

१—हरिभद्रीयावश्यकवृत्तौ प्रदेशव्याख्या। ६—उपदेशमाला।
२—शतकभाष्यविवरणम्। ७—स्वोपज्ञवृत्तिः।
३—अनुयोगद्वारविवृतिः। ८—भावनासूत्रविवरणम्।
४—जीवसमासविवरणम्। ९—नन्दीसूत्रविवरणम्।
५—भावनासूत्रम्। १०—विशेषावश्यकविवरणम्।

## चन्द्रसूरिः

अयं संग्रहसूत्रकर्ता ११६३ विक्रमाब्द आसीत्। लक्ष्मणगणिकथनानुसारमयमाचार्यो लाटदेशे विचरति स्म। अस्य शिष्येण देवभद्रेण संग्रहसूत्राणामुपरि वृत्तिरलेखि।

## विजयसिंहसूरिः

प्रशस्तिसङ्ग्रहप्रथमभागस्य ५५ पृष्ठे लिखितमस्ति यत् खम्भातनगरस्य शान्तिनाथपुस्तकालये भरुचनगरनिवासिना पद्मदेवेन रचितं तालपत्राङ्कितं कल्पसूत्रं प्राप्यते। तत्र पुस्तक-लेखनकालो १२४७ विक्रमाब्दस्याषाढशुक्लनवमी रविवासरो विद्यते। अयं पद्मदेवो विजयसिंहसूरिशिष्योऽतोऽयमपि गुर्जरदेशीय एवानुमीयते। विजयसिंहसूरिणा रचिता उपदेशमाला अधुनाऽपि प्राप्यते यस्यामस्य समयः ११६१ विक्रमाब्दो लिखितो वर्तते।

## देवभद्रः

अयं मुनिसुव्रतचरित, संग्रहसूत्रवृत्ति, सिद्धसेनदिवाकर-कृतन्यायावतारसूत्र—विवृति, निर्यावलिकासूत्रवृत्ति—कर्ता विक्रमस्य १२ शतकान्त आसीत्। यद्यपि गायकवाड़—सीरीजे, जैसलमेरपुस्तकभण्डारसूच्यां च न्यायावतारसूत्रविवृतिकर्ता राजशेखरः कथितः किन्तु नैषा वार्ता सत्या यतः १६२८ खिस्ताब्दे सम्पन्ने जैनकान्फ्रेन्से वितीर्णायां अस्या वृत्तेरन्तिमपद्ये देवभद्रस्यैव नाम वर्तते, यथा—

न्यायावतारविवृत्तौ विषमं विभज्य,
किञ्चिन्मया यदिह पुण्यमवाप शुद्धम्।
सन्त्यज्य मोहमखिलं भुवि भव्यदेव—
भद्रैकभूमिरमुनाऽस्तु समस्तलोकः॥

## डल्लनाचार्यः

अयं भादानकदेशनरेशस्य सहनपालस्य समय आसीत्। सहनराजस्य समयः खिस्तस्य १३ शतकः। अयमेव समयो डल्लनाचार्यस्यापि। अयमुक्तनरेशस्य सभ्य आसीत्। अस्य पिता आकोलाग्रामवासी भारतपालः। डल्लनाचार्येण सुश्रुतसंहितायां निबन्धसंग्रहनाम्नी व्याख्या लेखि। तत्र तेन स्वकीयो वंशः सौरवंशो लिखितः अयं सौरवंशः सनाढ्यजातिबोधकः। सन-नामकव्रतेन सह सूर्यस्य सम्बन्धः, तेनाढ्यः सम्पन्न एव सनाढ्यो भवितुमर्हति। सनाढ्यजातिः कान्यकुब्जब्राह्मणजात्यन्तर्गता। यतः 'कान्यकुब्जाः सनाढ्याः' क्वचिदुक्ताः। पं० रघुनन्दनशर्मणा सनाढ्याः कान्यकुब्जब्राह्मणाश्चाभिन्ना मताः अतो वक्तुं शक्यते

यद् डल्लनाचार्यः कान्यकुब्जब्राह्मण आसीत् । अधुना यमुनात आरभ्य चम्बलतटपर्यन्तं वर्तमानेषु भरतपुर, धौलपुर, करौली, कोटा, झालरापटनादिराज्येषु सनाढ्यब्राह्मणा वसन्ति अत्रैवा-कोलाग्रामोऽपि वर्तते यत्रोत्पन्नेन क्षेमशर्मणा स्वकीये पाकप्र-काशे डल्लनाचार्यः स्मृतोऽपि ।

## हरदत्तः

अयं षडङ्गे कूष्माण्डप्रदीपिकाभिधायाष्टीकायाः कर्ता । "यद् देवा देवहेडनम्" इति मन्त्रादारभ्य मन्त्रत्रयाणां कूष्माण्ड-सूक्तमिति संज्ञा वर्ततेऽतः प्रायो हरदत्तेन स्वटीकाया नाम कूष्माण्डप्रदीपिकेति कृतम् । अस्यां टीकायाममरकोषटीकाकारस्य रायमुकुटस्य तथा मन्त्रभाष्यकर्तुरुवटस्य नामास्त्यतो हर-दत्तस्य समयः ख्रिस्तस्य १३ शतकादर्वाचीनो न भवितुमर्हति । कूष्माण्डप्रदीपिकायाः पुस्तकद्वयं पञ्जाबविश्वविद्यालयपुस्तकालये श्रूयते । प्रदीपिकारम्भेऽयं वदति—

औवटं मन्त्रभाष्यञ्च परीक्ष्य च पुनः पुनः ।
प्रथ्यते हरदत्तेन कूष्माण्डस्य प्रदीपिका ॥

## गोविन्दाचार्यः

अयं ख्रिस्तस्य १३ शतके गुर्जरेऽभूत् । अनेन रससार-नामको ग्रन्थो निर्मितः । अस्य पिता सुरादित्यः, पितामहः सह-देवश्च । अयं मोढज्ञातीयब्राह्मणः । अनेन रससारसमाप्तौ स्वप-रिचय इत्थमदायि—

मोढज्ञातिसमुत्पन्न आचार्यः सहदेवकः ।
सर्वशास्त्रप्रवीणोऽसौ मन्त्रसिद्धो द्विजोत्तमः ॥
तदुत्पन्नस्तु यः सूनुः सुरादित्यः कृती भुवि,
तत्सम्भवः सुतः ख्यातो गोविन्दः शिवचन्द्रकः ।
शिष्यः श्रीचन्द्रदेवस्य रसकर्मसु कोविदः ॥
अनुभूयेदमखिलं शास्त्रं तेन विनिर्मितम् ।
कृपया धातुवादीनां दीनत्वस्य विनाशनम् ॥
चन्द्रवेदसमुत्पन्नो ज्ञात्या सारस्वतो द्विजः ।
अभयपालस्य पुत्रोऽसौ धीरदेवो हि वाग्भटात् ।
निर्मथ्य सर्वशास्त्राणि अनुभूय पुनः पुनः ।
बौद्धं मतं तथा ज्ञात्वा रससारः कृतो मया ॥
एकधा दशधा चैव शतधा तु सहस्रधा ।
महाप्रणीतेषु योगेषु सिद्धिर्ज्ञेया विचक्षणैः ॥
मदुक्तं सर्वशास्त्रेषु यदिहास्त्यखिलं हि तत् ।
यदिहास्ति तदन्यत्र नैवास्ति रसकर्मणि ॥

## केशवार्कः

अयं ख्रिस्तस्य १२४२ तमे वर्षे भारद्वाजगोत्रे समुद्भूत । अस्य पिता रणगणः, पितामहः श्रियादित्यः, प्रपितामहो जनार्दनः, अयं नर्मदातटवासी ब्राह्मणोऽवदीच्यः । एतत्प्रणीतं विवाहवृन्दावनं, कर्णकण्ठी चेति ग्रन्थद्वयं प्राप्यते ।

## गङ्गादासः

अयं छन्दोमञ्जर्याः कर्ता अस्य पिता वैद्यगोपालदासः, जननी सन्तोषा यदुक्तमनेनैव—

देवं भगवन्तं गोपालं वैद्यगोपालदासजः ।
सन्तोषात्तनयश्छन्दो गङ्गादासस्तनोत्यदः ॥

अनेनापरावपि ग्रन्थौ प्रणीतौ इत्यस्य छन्दोमञ्जरीग्रन्थान्तलेखेन ज्ञायते—यथा—

सर्गैः षोडशभिः समुज्ज्वलपदैर्नव्यार्थभव्याशयै—
र्येन कारि तदच्युतस्य चरितं काव्यं कविप्रीतिदम् ।
कंसारेः शतकं दिनेशशतकं द्वन्द्वं च रम्याकृती
गङ्गादासकवेः श्रुतौ कुतुकिनां स्वच्छन्दसां मञ्जरिः ॥

अनेन मुरारेर्जयदेवस्य च श्लोकाः "छन्दोमञ्जर्याम्" समुद्धृताः । जयदेवश्च खिस्तस्य १२ शताब्द्यां भवति, अतोऽस्य कालस्तदनन्तरमेव त्रयोदशी शताब्दी निश्चीयते ।

## चित्सुखः

अनेन "तत्वप्रदीप" नामके स्वकीये ग्रन्थे ईसोः १२ शताब्द्यामुत्पन्नस्य न्यायलीलावतीकर्तुर्बल्लभाचार्यस्य खण्डनं कृतं यत्र तस्या एव शताब्द्या उत्तरभागोत्पन्नस्य श्रीहर्षमिश्रस्य मतमुद्धृतम् । ईसोस्त्रयोदशशताब्द्यन्तात् आरभ्य चतुर्दशशताब्दपूर्वभागजातेन विद्यारण्यस्वामिना स्वग्रन्थेऽयं स्मृतोऽतोऽनुमीयते यदयं त्रयोदशशताब्द्यामीसोर्वर्तमान आसीत् । चित्सुखेन तत्वप्रदीपमङ्गलाचरणे स्वगुरुः ज्ञानोत्तमः स्वीकृतः । अनेन न्यायमकरन्दस्य टीका तत्वप्रदीपस्तथा खण्डनखण्डखाद्यस्य टीका लिखिता । तत्वप्रदीपस्य द्वितीयं नाम चित्सुखी वर्तते ।

## राघवचैतन्यः

अयं शार्ङ्गधरकवेः पितामहः । शार्ङ्गधरपद्धत्यामस्य बहवः श्लोकाः समुद्धृताः सन्ति । रणथम्भोरनरेशो हमीरदेवोऽस्य शिष्यः । अस्य प्राचीनं नामासीद् राघवदेवः, किन्तु सन्यासग्रहणानन्तरमयं राघवचैतन्यनामा बभूव । हमीरदेवस्य समयः १२६५ ख्रिस्ताब्दोऽतो राघवचैतन्यस्यापि स एव । अस्य महागणपतिस्तोत्रं प्राप्यते । अस्य रचनेदृशी—

सेवाहेवाकिदेवासुरनरनिकरस्फारकोटीरकोटी-
कोटिन्यासोल्लसद्द्युमणिसममणिश्रेणिभावेणिकानाम् ।
राजीराजन्नखश्रीस्नखचरणनखद्योतविद्योतमानः,
श्रेयः स्थेयः स देयान्मम विमलदृशो बन्धुरं सिन्धुरास्यः ॥

## गंगादेवी

इयं वीरकम्पनरायस्य पत्नी तथा विजयनगराधिपतेर्महाराजबुक्कस्य स्नुषा । सायणाचार्यो विजयनगरराज्यसंस्थापकः । बुक्कमहाराजः सायणाचार्येणैव राजपदे संस्थापितो विजयनगरस्य । बुक्कमहाराजस्य सिंहासनारोहणकालः १३३६ ख्रिस्ताब्दोऽतो गङ्गादेवी १३३६ त आरभ्य १३५० ख्रिस्ताब्दपर्यन्तमवश्यमेव भवितुमर्हति ।

गङ्गादेवी महाकवयित्री । इयं वीरकम्पनचरितमिति काव्यं लिलेख । इदं काव्यं मद्रासस्य विद्याविलासयन्त्रालयेनापूर्णमेव प्रकाशितं किन्तु साम्प्रतं "स्वल्पं तदपि दुर्लभम्" इत्युक्तिश्चरितार्थयति । श्रूयतेऽस्मिन् काव्ये हिन्दु, आर्य, सनातन,

भारतमातादयः शब्दाः अपि आगताः सन्ति । गङ्गादेव्याः समये हिन्दु-मुसल्मानयोर्मध्ये भयानकः कलहः आसीत् । अस्मिन् काव्ये तस्यैव प्रतिच्छायाऽवलोक्यते । इयं वीरस्नुषा, वीररमणी वीराङ्गना स्वयमपि युद्धेषु सम्मिलिता भवति स्म । मुसल्मानानां भयङ्करीयं संस्कृतभाषापक्षपातिनी यवनगृहशुकसारिकादिशकुन्तानां मुखेभ्यो निःसृतामपि फारसीभाषां न श्रोतुमिच्छति स्म, यथा—

न तथा कटुघूत्कृताद् व्यथा मे हृदि जीर्णोपवनेषु घूकलोकात् ।
परिशीलितपारसीकवाग्भिर्यवनानां भवने यथा शकुन्तैः ॥

## राजशेखरसूरिः ।

अयं प्राकृतद्व्याश्रयकाव्य, प्रबन्धकोषकर्ता जैनः । बड़ौदा-नगरवर्तमाने हंसविजयशास्त्रसंग्रहे सङ्गीतोपनिषद्ग्रन्थसार-नामको ग्रन्थो वर्तते । तत्र लिखितमस्ति यद्धर्षपुरीयगच्छे अभयदेवसूरिनामाचार्यो बभूव । यस्योत्कृष्टां प्रतिष्ठां गुर्जरनरेशः कर्णदेवः करोति स्म । अस्य शिष्येषु सङ्गीतविशारदस्य नरचन्द्र-सूरिणः शिष्यात्तिलकसूरिणो राजशेखरसूरिणा दीक्षाऽऽदत्ता । अस्य समयः १३४७ खिस्ताब्दः ।

## सुधाकलशः ।

अयं जैनः । अनेनैकाक्षरनाममालाऽलेखि । अस्याश्चर्चा समयसुन्दरगणिकृतायामर्थरत्नावल्यपरनाम्न्यामष्टलक्षाध्यां, गुणरत्नपण्डितकृते नमस्कारप्रथमपदार्थे, मानससागरविरचितायां परिग्रहारम्भमग्नायाञ्च वर्तते । एकाक्षरनाममालायां केवलं ५० श्लोकाः सन्ति । अन्तिमश्लोकाध्ययनात् परिज्ञायते यदयं

राजशेखरसूरिणः शिष्यः। राजशेखरस्य समयः १३४७ ख्रिस्ताब्दो ऽतोऽस्यापि स एव ज्ञेयः। अयं वदति—

मलधारिगच्छभर्तुः सूरेः श्रीराजशेखरस्य गुरोः।
शिष्यः सुधाकलश इत्येकाक्षरनाममालिकामतनोत्॥

## वरदाचार्यः

स्वकीये तत्त्वनिर्णयग्रन्थेऽयं स्वं वात्स्यायनगोत्रं वदति। अयं श्रीरामानुजाचार्यस्य भागिनेयः। अस्य पिता देवराजाचार्यः—ख्रिस्तस्य त्रयोदशशतकारम्भ आसीत्। अस्मादेव श्रीभाष्यमधीत्य सुदर्शनाचार्येण श्रुतप्रकाशिका लिखिता।

## सुदर्शनाचार्यः

अयं तामिलप्रान्ते जातः। अस्य पिताऽऽसीद् विश्वजयी नाम्ना। अयं हारीतगोत्रीयो ब्राह्मणः। अस्य गुरुर्वरदाचार्यः। अयं ख्रिस्तस्य त्रयोदश्यां शताब्द्यामुत्पन्नः। अनेन भगवतः श्रीरङ्गनाथस्याज्ञया गुरोर्मुखाच्छ्रीभाष्यमाकर्ण्य श्रुतप्रकाशिका, वेदार्थसंग्रहस्योपरि तात्पर्यदीपिका, ब्रह्मसूत्रस्योपरि श्रुतप्रदीपिका टीका च निर्मिता।

१३६७ ईसाब्दे दिल्लीबादशाहोऽलाउद्दीनः सेनापतिं मलिक काफूरं मदुराक्रमणाय प्रेषयामास। मार्गे तेन श्रीरङ्गस्योपर्यत्याक्रमणं कृतम्। तस्मिन्नेव बहुभिरन्यैर्जनैः सह सुदर्शनाचार्योऽपि मुसलमानैर्मारितः।

## वरदाचार्यः

अयमेव नड़ादरम्मलापरपर्यायः । अस्य पितामहः सुदर्शनाचार्यस्य गुरुः श्रीरामानुजाचार्यस्य शिष्यो वरदाचार्यो वा वरदार्यः । अयं ख्रिस्तस्य त्रयोदश्यां शताब्द्यां जातः । अस्य तत्वसार, सारार्थचतुष्टयनामकं ग्रन्थद्वयं विद्यते ।

## वीरराघवदासाचार्यः

अयं वधूलवंशे जातः, अस्य पिता नरसिंहगुरुः । अयं वरदाचार्यस्य प्रधानः शिष्यः । अनेन तत्वसारस्योपरि रत्नप्रसारिणी टीका लिखिता ।

## वादिहंसाम्बुवाचार्यः

अस्य द्वितीयं नाम रामानुजाचार्यः । अयं वेङ्कटनाथवेदान्ताचार्यस्य मातुलस्तथा गुरुः । अस्य पिता पद्मनाभाचार्यः । श्रूयतेऽनेन सुविस्तृतो न्यायकुलिशनामा ग्रन्थोऽलेखि । अयमासीत १३२५ विक्रमाब्दे ।

## अमलानन्दः

अयं दक्षिणभारतवर्तिदेवगिरिवासी । अस्य वेदान्तकल्पतरुग्रन्थे यादववंशीयस्य राज्ञो रामचन्द्रस्योल्लेखो वर्तते यश्च १२६८ ईसाब्दे अलाउद्दीनेनाक्रान्तः । राजा रामचन्द्रः १२६० ईसाब्दादारभ्य १२७१ ईसाब्दपर्यन्तं देवगिरिं शासति स्म । अस्य ग्रन्थेऽलाउद्दीनाक्रमणस्य चर्चा नास्त्यतोऽनुमीयतेऽयं त्रयोदशशताब्द्या अन्तिमे भागे बभूव । अस्य गुरुः अनुभवा-

नन्दः । अस्य ग्रन्थेषु भामत्याष्टीका, वेदान्तकल्पतरुः, ब्रह्मसूत्राधिकरणव्याख्या, शास्त्रदर्पणम् तथा पद्मपादाचार्यकृतपञ्चपादिकायाः व्याख्या पञ्चपादिकादर्पणम् इति सन्ति ।

## रामानन्दाचार्यः

अयं १३५६ विक्रमाब्दे प्रयागक्षेत्रे जातः । अस्य पिता पुण्यसदनसामा माता च सुशीला । अयं कान्यकुब्जब्राह्मणः शुक्लः । रामानन्दस्य प्राचीनं नाम रामदत्त इति । अयं राघवानन्दस्य शिष्यो भूत्वा रामानन्दो वभूव एकदा तीर्थयात्राप्रसङ्गेन भारतस्य वहूनि स्थलानि परिभ्रम्य स्वमठमागत्य यदा स्थितस्तदाऽयं तत्रत्यैरन्यैर्जनैर्वहिष्कृतो यत् त्वया सम्प्रदायनियमा न पालिता इत्युक्तवद्भिः । तद्वाक्यप्रभावितो हिन्दुजातेरुपकाराय रामावतसम्प्रदायं संस्थापितवान् यश्चाधुना रामानन्दसम्प्रदायनाम्ना प्रसिद्धः । अनेन काश्याः पञ्चगङ्गाघट्टे स्वसम्प्रदायानुकूलमठस्य स्थापनमकारि । रामानंददिग्विजयग्रंथेऽस्य संबंधेऽनेकाश्चमत्कारपूर्णघटनाः सन्ति । अयं संस्कृतस्य प्रकाण्ड आसीत् पण्डितः । रामानंदभाष्य--वैष्णवमताब्जभास्कराख्यं ग्रंथद्वयमस्याधुना प्राप्यते । श्रूयतेऽयं १११ वर्षपर्यन्तं जीवितो बभूव । साम्प्रतमुत्तरभारते रामानंदसम्प्रदायस्य परमः प्रचारः । अस्य रचनेदृशी—

अथोच्यते निर्भरतापरैस्तैः, श्रीव्याप्तिरद्धा सुबुधैरणुस्वतः ।
प्रपञ्चनिमातृ विरञ्चिहेतु श्रीरामपादाब्जनिाः क्षमानसैः ॥
पुरुषकारपरा विनिगद्यते, सकमला कमला कमलाप्रिया ।
इयमसौ कुशलैस्तदुपायता, नृभिरुपायशून्यपरैः परैः ॥

## बिन्दुः

अस्य ग्रंथः "रसपद्धतिः" विद्यते यथाऽयमेव ग्रन्थारम्भे मङ्गलाचरणे लिखति—

"नत्वा निष्कपटं निरञ्जनधिया निश्चिन्तमीशप्रिया-
मायुर्वेदविदां मुदे सुभिषजामेषा मया बिन्दुना।
ग्रन्थेभ्यः परिगृह्य सारमखिलं सूत्रैस्त्रिभिः स्रग्वी
वृत्तेभ्यः स्रगिव प्रसूननिचयः संग्रथ्यते पद्धतिः॥

अस्य ग्रंथस्योपरि टीकैका विद्यते या महादेवेन लिखि-ता। महादेवोऽयं बिन्दुतनय इति—टीकांतस्थेन श्लोकेन ज्ञा-यते। स च श्लोको न सर्वत्र, बीकानेरतो लब्धपुस्तक एवोपलभ्यत इति यादवशर्ममहोदयः टीकायामस्यां महाराष्ट्रदेशप्रसिद्ध—भूरिपर्यायदर्शनादमुं महाराष्ट्रियं स्वीकरोति। रसपद्धतेर्बहूनि पद्यानि रसकामधेनौ, आयुर्वेदप्रकाशे च समुद्धृतान्यतोऽयं सप्तद-शशतकोत्पन्नादायुर्वेदप्रकाशकारात्तथा १५ शतकोत्पन्नाद्रसकामधे-नुकारात्प्राचीनत्वाच्चतुर्दशे वा १३ शतके त्रयोदशे खिस्तस्याऽसीद्।

## पद्मनाभाचार्यः

अयं मध्वाचार्यशिष्यः। अस्य प्राचीनं नाम शोभन-भट्टः। अयं चालुक्यराजधान्यां कल्याणे वसति स्म। अयमेव मध्वाचार्यस्य स्थानापन्नो बभूव अयं स्वगुरोर्ग्रंथेषु टीकाःतथा पदार्थसंग्रहाभिधं मध्वसिद्धांतसारटीकासमेतं ग्रन्थं लिलेख। अयमीसो त्रयोदश्यां शताब्द्यां बभूव।

## अभयदेवः

अभयदेवः एकोनविंशतिसर्गात्मकजयन्तविजयमहाकाव्यस्य रचयिता श्वेताम्बरजैनाचार्यो महाकविः। जयन्तविजयमहाकाव्यस्य कविप्रशस्तौ काव्यसमाप्तेः समयो १२७८ दत्तः। स एवास्याप्यनुमेयः। यथा—

दिक्करिकुञ्जगिरिदिनकरप्रमितविक्रमनरेश्वरसमायाम्।
द्वाविंशतिशतमानम् शास्त्रमिदं निर्मितं जयति ॥

केचिद् वदन्ति समवायाङ्गटीकायाः कर्ता तथा नावाङ्गवृत्तिकृदयमेव अभयदेवाचार्यसूरिस्तन्न, यतः समवायटीकायाः समाप्तौ लिखितमस्ति—

"एकादशसु शतेष्वथ विंशत्यधिकेषु ११२० विक्रमसमानाम्।
अणहिल्लपाटनगरे रचिता समवायटीकेयम् ॥"

अथ नवाङ्गवृत्तेरप्यन्ते लिखितमस्ति—

"अष्टाविंशतियुक्ते वर्षसहस्रे शतेन चाभ्यधिके ११२८।
अणहिल्लपाटनगरे कृतेयमच्छुप्तधनिवसतौ ॥"

एवमयमेवाभयदेवसूरिः वैक्रमे ११३५ वत्सरे नामशेषतां गत इति प्रबन्धचिन्तामणिप्रस्तावनायां रामचन्द्रशास्त्री वदति। अनेनैवाभयदेवेन प्राकृतभाषायां रोलाच्छन्दसि चतुर्विंशतिमात्रात्मके त्रिंशत्तमपद्यैः स्तम्भनकपार्श्वनाथस्तोषितः। विचारणीयोऽस्य विषयो यद् ११३५ विक्रमाब्दे कीर्तिशेषताङ्गतोऽभयदेवो १२७८ विक्रमाब्दे कथं 'जयन्तविजयस्य" रचयिता भवितुमर्हति ? अत्र जयन्तविजयस्य कविप्रशस्तिः रहस्योद्घाटनं विदधाति। तत्रास्ति—

'अभवदभयदेवः सूरिरस्मात् ( जिनेश्वरात् ) स यस्य,
प्रभुरभजत तोषं स्तम्भने पार्श्वनाथः ।
प्रकटितनिकटार्थां संघसाम्राज्यवृद्ध्यै,
व्यधित निधिसमानां यश्च वृत्तिं नवाङ्ग्याः ॥

प्रशस्तिपठनेन प्रकटीभवति यद् ११३५ विक्रमाब्दे नामशेषतां गतस्याभयदेवस्य चतुर्थपीठे जयन्तविजयप्रणेता १२७८ विक्रमाब्दे आचार्यसूरिरयमपरोऽभयदेवो बभूव। जयन्तविजयस्य कविता कोमला सरलमतिभिरप्यभिगम्या यथा—

यत्राभिरामाणि विशालशालिक्षेत्राणि संरक्षितुमीयुषीणाम् ।
गोपाङ्गनानां मधुरोपगीतैः, कृच्छ्राद् युवानः पथि यान्ति पान्थाः ॥
जिनेन्द्रहर्म्योपरिशातकुम्भकुम्भावलीषु प्रतिबिम्बितात्मा।
अनेकमूर्तिः प्रतिभाति भानुर्ह्यस्याः श्रियं द्रष्टुमिवावतीर्णः ॥

## वेङ्कटनाथः

अयं ख्रिस्तस्य त्रयोदश्यां शताब्द्यां द्रविड़देशे आसीत्। अयं कवितार्किकसिंहं वेदान्ताचार्यं सर्वतन्त्रस्वतन्त्रं स्वं वदति अस्य ग्रन्थाः अधिकारसंग्रह, तत्वमुक्ताकलाप न्यायसिद्धाञ्जन, पादुकासहस्र, यदुवंशकाव्याभिधाः प्राप्यन्ते । अस्य रचनेदृशी—

अमित्रे विश्वासः श्वपचकरके सौमिकरसः,
कपाले गङ्गाम्भः खलपरिषदग्रे सुजनता।
परिक्षीणाचारे श्रुतिरनुपनीते च निगमः,
स्वतः सिद्धां शाद्धं त्यजति विपरीतं च फलति ॥

विभवेऽप्यपि दोषगन्धहीनः प्रलयेऽपि स्थितिमन्वयां दधानः ।
विषयेऽप्यपि भावयन् समर्थः पुरुषः कोऽपि हृदि स्थितः प्रजानाम् ॥

## गुणाकरः

अयं श्वेताम्बरजैनः । अनेन नागार्जुनप्रणीत—योगरत्नावल्याष्टीका कृता । अयं १२९६ विक्रमाब्द आसीत्, यथोच्यते टीकान्ते—

श्रीमन्नृपविक्रमतो द्वादशनवषड्भिरङ्किते वर्षे ।
रचिता गुणाकरेण श्वेताम्बरभिक्षुणा विवृतिः ॥

## महेन्द्रसूरिः

अयं यन्त्रराजस्य कर्ता । अस्य गुरुर्मदनसूरिर्भृगुपुरनिवासी । अयं यन्त्रराजावलोकनेन प्रतीयते यद् १२९२ शकाब्द आसीत् । अस्य रचनेदृशी—

क्लृप्तास्तथा बहुविधा यवनैः स्ववाच्या,
यन्त्रागमा निजनिजप्रतिभाविशेषात् ।
तान् वारिधीनिव विलोड्य मया सुधावत्,
तत्सारभूतमखिलं प्रणिगद्यतेऽत्र ॥
नक्षत्रगोले स्वनयैव रीत्या रहस्यमेतद् यवनागमस्य ।
दृक्कर्मशुद्धानि विधाय भानि यन्त्रे निवेश्यानि गुरूपदेशात् ॥
गुरूपदेशं प्रबलं पानपात्रमिवाश्रिताः ।
सद्बुद्धयस्तरन्त्येव चितरय गणितं पदम् ॥

## मलयेन्दुसूरिः

अयं महेन्द्रसूरिरचितस्य यन्त्रराजस्य टीकाकारः । मलयेन्दुसूरिर्महेन्द्रसूरेः शिष्यः । अयं वदति—

फीरोजशकेन्द्रसर्वगणकैः पृष्टो महेन्द्रप्रभु-
र्जातः सूरिवरस्तदीयचरणाम्भोजैकभृङ्गद्युता ।
सूरिश्रीमलयेन्दुना विरचितेऽस्मिन् यन्त्रराजागम-
व्याख्याने प्रविचारणाधिकथनाध्यायोऽगमत् पञ्चमः ॥

फीरोजशाहखिलजीः जलालुद्दीनापरनामा १२८८ ई०-साब्दे दिल्लीसिंहासनमारूढस्तथा ७ वर्षानन्तरमलाउद्दीनेन भ्रातृपुत्रेण पातितः । अयमेव समयो मलयेन्दुसूरेरपि ज्ञेयः । अस्य रचनेदृशी—

विद्येयं महती प्रोक्ता गहने गणितागमे ।
कुशिष्याय कृतघ्नाय दुष्टायैव न दीयते ॥

## उदयप्रभाचार्यः

अयं धर्माभ्युदय सुकृतकल्लोलिनीति ग्रन्थद्वयकर्ता जैनकविः अणहिल्लपाटणे वसति स्म १२८६ विक्रमाब्दे ।

## जयसिंहः

अयं हम्मीरमदमर्दनमहाकाव्यकर्ता पाटणनृपतेर्भीमस्य मन्त्रिणं वस्तुपालं स्वग्रन्थे स्मरत्यतो वक्तुं शक्यते यदयं विक्रमस्य त्रयोदश्यां शताब्द्यामासीत् ।

## राघवेन्द्रयतिः

अयमभूत् ख्रिस्तस्य १४ शतके । अनेनेशावास्योपनिषदि सारसंग्रहनामकं भाष्यमलेखि । इदं शङ्कराचार्यकृतभाष्य-मनुकरोति किन्तु संक्षिप्तं, सारवद्, विश्वतो मुखम् । अयं स्व-भाष्ये वदति--

ईशावास्योपनिषदो भाष्याद्युक्तार्थसंग्रहः ।
राघवेन्द्रेण यतिना कृतोऽयं शिष्ययाञ्चया ॥

## नरचन्द्रसूरिः

अयं जैनः ख्रिस्तस्य चतुर्दशे शतक आसीत् । अभयदेवसूरिणः शिष्येणानेन सङ्गीतोपनिषद्ग्रन्थसारोद्धारोऽलेखि । अयं हर्षपुरे वसतिस्म । नरचन्द्रसूरिणा हर्षपुरस्य महती प्रशंसा कृता स्वपरिचयेन सह, यथा—

राजानः प्रतिबोधिताः कति, कति ग्रन्थाः स्वयं निर्मिताः ।
वादीन्द्राः कति निर्जिताः, कति तपांस्युग्राणि तप्तानि च ।
श्रीमद्धर्षपुरीयगच्छमुकुटैः श्रीसूरिसूत्रामलैः,
सच्छिष्यैर्मुनिभिश्च वेति नगरं वागीश्वरं तन्मतम् ॥

श्रीविनयविजयोपाध्यायेन १६६६ विक्रमाब्दे कल्पसूत्राणां सुबोधिकानाम्नी वृत्तिर्लिखिता । तदवलोकनात् प्रतीयते यद्धर्षपुरे तदानीं ३०० जिनमन्दिराणि, ४०० लौकिकप्रासादाः, १८०० ब्राह्मणानां हर्म्याणि, ३५००० वणिजां गृहाणि, ६०० आरामोपवनानि, ७०० वाप्यः, २०० कूपाः, ७०० दानशालाश्चासन् ।

नरचन्द्रसूरिणः प्रशस्तिस्तच्छिष्येण चन्द्रसूरिणा मुनिसुव्रतचरितनामके पुस्तके परमोत्कृष्टाऽलेखि ।

## मेरुतुंगाचार्यः

अयं जैनो विद्वान् प्रबन्धचिन्तामणिकर्ता १३६२ विक्रमाब्द आसीत् । प्रबन्धचिन्तामणावयं वस्तुपाल-तेजपालनाम्नोर्भ्रात्रोः पाटणनृपतिमन्त्रिणोर्जन्मकथामित्थं लिखति—

"मन्त्रिणस्तु जन्मवार्ता चैवम् । कदाचिच्छ्रीमत्पत्तने भट्टारकश्रीहरिभद्रसूरिभिर्व्याख्यानावसरे कुमारदेव्यभिधाना काचिद्विधवाऽतीवरूपवती मुहुर्मुहुर्निरीक्ष्यमाणा तत्र स्थितस्याशराजमन्त्रिणश्चित्तमाचकर्ष । तद्विसर्जनानन्तरं मन्त्रिणानुयुक्ता गुरव इष्टदेवतादेशादमुष्याः कुक्षौ सूर्याचन्द्रमसोर्भाविनमवतारं पश्यामः । तत्सामुद्रिकानि भूयो विलोकितवन्त इति प्रभोर्विज्ञाततत्वः स तामपहृत्य निजां प्रेयसीं कृतवान् क्रमात्तस्या उदरेऽवतीर्णौ तावि॒व ज्योतिष्केन्द्राविव वस्तुपाल—तेजपालाभिधानौ सचिवाववभूताम् ।"

## शार्ङ्गदेवः

अयं देवगिरिनृपतेः सिंहस्य वा सिंघणस्याऽऽश्रितः ख्रिस्तस्य १३ शतके बभूव । अनेन सङ्गीतरत्नाकरनामा ग्रन्थोऽलेखि, यस्य च टीकाऽकारि सङ्गीतसुधाकरनाम्नी ग्रन्थकर्तुराश्रयदात्राऽऽन्ध्रमण्डलाधीश्वरेण शिंगेन ।

## शिंगः

अयं देवगिरिनृपतिः सिंहाख्यो वा सिंघणनामा सङ्गीतरत्नाकरकर्तुः शार्ङ्गदेवस्याश्रयप्रदाता । अयं रेचल्लवंश्यः षट्पुत्रैः सह विन्ध्याचलश्रीशैलमध्यवर्तिनि राजाचले वसति स्म । अयं शिङ्गभूपालनाम्ना प्रसिद्धः चतुरकल्लिनाथेन ख्रिस्तस्य १६ शतके विद्यमानेन कृतामेकां सङ्गीतरत्नाकरस्य टीकामवलोक्य श्री पी० आर० भाण्डारकरेण भ्रमोऽकारि शिङ्गस्य चतुरकल्लिनाथकालिकतां प्रख्यापयता यतोऽस्य नृपतेः रसार्णवसुधाकरनामाऽपरो ग्रन्थोऽधुनैव प्रो० शेषगिरिशास्त्रिणाऽधिगतो

यत्र तस्य समयो मतः ख्रिस्तस्य १३ शतकः । अत्र मैथिलाना-मिदं कथनं नार्चितं यदयं शिङ्गो मिथिलाधिपतिर्यतः शिंगः स्वयमेव स्वमित्थं वदति—

"इति श्रीमदान्ध्रमण्डलाधीश्वरप्रतिगुणभैरवश्रीयनवाननरेन्द्रनंदनभुजबलभीमश्रीशिंगभूपालविरचितायां सङ्गीतरत्नाकरटीकायां सुधाकराख्यायां रागविवेकाध्यायो द्वितीयः ।" एवमेव रसार्णवसुधाकरनाम्नि नाट्यालङ्कारेऽपि तेन लिखितम् ।

## कुल्लूकभट्टः

अयं ख्रिस्तस्य १३ शतके समुत्पन्नः । अनेन मनुस्मृतेः मन्वर्थमुक्तावली नाम्नी टीका विरचिता । अनेन टीकायां गोविन्दराजकृतभाष्यास्यनुसरणं कृतम् । क्वचित् क्वचित् तन्मतखण्डनं च । अयं दिवाकरस्य तनयः शाण्डिल्यगोत्रीयः । आसीदसौ गौडदेशीय नंदग्रामवास्तव्यः, परमनेन काश्यामध्ययनं कृतम् । तत्रैव मन्वर्थमुक्तावली विरचिता । अयं स्वयोग्यतापरिचायकमेकं श्लोकं मन्वर्थमुक्तावल्यारम्भे वदति—"मीमांसे ! बहु सेवितासि सुहृदस्तर्काः समस्ताश्च मे ।" इत्यादि ।

## यशोधरः

रसप्रकाशसुधाकरस्य कर्ताऽयम् श्रीगौड [ श्रीगोल ] ब्राह्मणः सौराष्ट्र [काठियावाड—सोरठ] देशान्तर्गतजीर्णदुर्गाख्य [जूनागढ] नगरवास्तव्यः । श्रीगौडब्राह्मणा लभ्यन्ते सौराष्ट्रे गुर्जरे च । ददात्ययं स्वपरिचयं ग्रन्थान्ते—

श्रीनारायणभक्तिसक्तमनसो विद्याविनोदाम्बुधेः
श्रीगौडान्वयपद्मनाभसुधियस्तस्यात्मजेनाप्ययम् ।

सद्वैद्येन यशोधरेण कविना विद्वज्जनानन्दकृद्
ग्रन्थोऽयं ग्रथितः करोतु सततं सौख्यं सतां चेतसि ॥
देशानां सुरराष्ट्रमुत्तमतमं तत्रापि जीर्णाभिधः।
प्राकारोऽस्ति स वेदशास्त्रनिरतैर्विप्रैश्च संशोभितः।
तस्मिन् विष्णुपदारविन्दरतिकृच्छ्रीपद्मनाभाभिध-
स्तत्पुत्रेण यशोधरेण कविना ग्रन्थः स्वयं निर्मितः ॥
सन्तोषाय सतां सुखाय रुजां शिष्यार्थसंसिद्धये
वैद्यानामुपजीवनाय विदुषामुद्वेगनाशाय वै ।
श्रीमद्दुर्गपुरान्तनेऽतिनिपुणः श्रीपद्मनाभात्मजः !
श्रीमद्भट्टयशोधरः कविवरो ग्रन्थं स्वयं निर्ममे ॥

एतेनास्य पिता पद्मनाभः सिध्यति ।

अस्य समयः डा० प्रफुल्लचन्द्ररायमहोदयेन ख्रिस्तस्य त्रयोदश्यां शताब्द्यां निर्धारितः । अस्य रचना—

शशिकलोल्लसितं हि शुभाननं शिवनिधानमधोक्षजपूजितम् ।
जननपालनसंहरणात्मकं हरिहरं प्रथमं प्रणमाम्यहम् ॥

जयसिंहसूरिः

अयं १३६५ ख्रिस्ताब्द आसीत् । अनेन कुमारपाल-चरितस्य रचना कृता । अस्य रचनेदृशी—

कर्णाटलाटमगधान्ध्रकलिङ्गवङ्ग-
कश्मीरकीरमरुमालवासिन्धुमुख्यान् ।
देशान् विजित्य तरणिप्रभवैः स सर्वैः,
सिद्धाधिपो निजपुरं पुनराससाद ॥
महोत्सवपुरान्निर्गत्य श्रीसिद्धनृपतिः ...
कोटिं द्रविणवति हेम्नां ददौ ...

## शङ्करानन्दः

अयं विद्यारण्येन पञ्चदश्यास्तथा, विवरणप्रमेयस्य मङ्गलाचरणे गुरुत्वेन स्मृतः अयं खिस्तस्य १३ शताब्द्यामासीत् । शङ्करानन्देनेमे ग्रन्था लिखिताः—

१ ब्रह्मसूत्रदीपिका, २ आत्मपुराणम्, ३ गीताटीका तथा १०८ उपनिषदां टीकाः ॥

## भारतीतीर्थः

माधवाचार्यापरनामकेन विद्यारण्येन जैमिनीयन्यायमाला—टीकाविस्तारे भारतीतीर्थः स्वगुरुः स्वीकृतः । वैयासिकन्यायमालायां विद्यारण्येन विद्यातीर्थस्तथा शङ्करानन्दोऽपि गुरुः स्वीकृतः । अत एवानुमीयते यदयमादौ विद्यातीर्थादधीत्य भारतीतीर्थात् तथा शङ्करानन्दादुपदेशं प्राप विद्यारण्यस्वामिशिष्येन रामकृष्णेन स्वपञ्चदशीटीकायां भारतीतीर्थ—विद्यारण्य--स्वामिनोर्नाम प्रतिपरिच्छेदं मङ्गलाचरणे गृहीतमतो विदामयं प्रवादो निर्मूलं यद्विद्यारण्य एव भारतीतीर्थः अनेन ब्रह्मसूत्रस्य चतुर्णामप्यध्यायानां संक्षेपः चतुर्ष्वेव श्लोकेषु कृतः । ते चेमे—

समन्वये स्पष्टलिङ्गमस्पष्टत्वेऽप्युपास्यगम् ।
ज्ञेयगं पदमात्रं च चिन्त्यं पादेष्वनुक्रमात् ॥
द्वितीये स्मृतितर्काभ्यामविरोधोऽन्यदुष्टता ।
भूतभोक्तृश्रुतेर्लिङ्गश्रुतेरप्यविरुद्धता ॥
तृतीये विरतिस्तत्त्वं पदार्थपरिशोधनम् ।
गुणोपसंहृतिर्ज्ञानबहिरङ्गादिसाधनम् ॥
चतुर्थे जीवतो मुक्तिरुत्क्रान्तेर्गतिरुत्तरा ।
ब्रह्मप्राप्तिर्ब्रह्मलोकाविति पादार्थसंग्रहः ॥

## अरिसिंहः

अयं काव्यकल्पलतावृत्तिनामकग्रन्थस्थसूत्राणां प्रणेता। यदुक्तं वृत्तिकृता तत्रैव—

"मत्वाऽरिसिंहसुकवेः कवितारहस्यम" इति

एषोऽरिसिंहः श्वेताम्बरजैनसम्प्रदायावलम्वी, त्रयोदशशताब्द्यामीसोरासीत्। यतोऽयं धोल्काराणावीरधवलस्य जैनमन्त्रिणो वस्तुपालस्याश्रये न्यवसत्। वस्तुपालस्य समयः १२४२ ईशाब्दः। वस्तुपालप्रशंसापरमनेन "सुकृतसंकीर्तनाभिधः" ग्रन्थो निबद्धः। बहूनां विदुषामयमत्र विवेको यदयं वीरधवलतनयस्य वीसलदेवस्य समय आसीत्।

अस्य पिता लावण्यसिंहो लवणसिंहो वा। किन्तु "आसड" कविरचितविवेकमञ्जरीटीकोपोद्घातेनावगम्यते यदयमेवारिसिंहस्य जनकः, तथा जननी पृथ्वी देवी।

## आसडः

अयमीसोः १३ शताब्द्यामासीत्। अनेनेमे ग्रन्थाः प्रणीताः—विवेकमञ्जरी उपदेशकंदली, आह्वानप्रकरणम् तथा कालिदासकृतमेघदूतटीकेति, गुरुरस्य श्रीमदभयदेवसूरिः। श्रीभिल्लमालकुलोत्पन्नः कटकराजनामाऽस्य पिता जैनः जननी चानलदेवी, जासडस्यायमग्रजः।

## बालचन्द्रसूरिः

अयं ख्रिस्तस्य १३ शताब्द्यामासीत् सौराष्ट्रगुर्जरयोर्मध्ये। अयं जैनाचार्यः सारस्वताचार्यनाम्ना विख्यातोऽस्ति। अनेन वसन्तविलासनामकं महाकाव्यं लिखितम्। अस्य रचनादर्शी—

चेतोऽञ्चलं चञ्चलतां विमोच्य सङ्कोच्य पञ्चापि सम शरीरान।
[illegible]

ज्योतिर्मतद्विदण्डवती सुषुम्णा कादम्बिनी मूर्ध्नि यदाऽभ्युदेति।
विशारदानां रसना प्रणाली, तदा कवित्वामृतमुद्‌गृणाति ॥

### श्रीपालः

ईसोत्रयोदशशताब्द्यामुत्पन्नेन जैनविदुषा प्रभाचन्द्रसूरिणा प्रभावकचरिते श्रीपालकृतविरोचनपराजयस्योल्लेखः कृतः। अयं कविः विरोचनपराजयग्रन्थस्य दुर्लभराजमेरु रुद्रमहालय, वड़नगरदुर्ग, सहस्रलिङ्गप्रशस्तीनाञ्च लेखकः। मेरुतुङ्गाचार्येण प्रबन्धचिन्तामणौ सहस्रलिङ्गप्रशस्तेः समुद्‌धृतः एकः श्लोकः। दुर्लभराजमेरु—रुद्रमहालयप्रशस्तयः प्रभावकचरिते लिखिताः सन्ति। श्रीपालः सोलङ्कीनृपतेः सिद्धराजस्य सभ्यः। सिद्धराजस्य कालः ११५० त आरभ्य ११६९ पर्यन्तं भवत्यतः श्रीपालस्याप्ययमेव ज्ञेयः। वड़नगरस्य प्रशस्तौ श्रीपालः स्वविषये वदति—

एकाहनिष्पन्नमहाप्रबन्धः श्रीसिद्धराजप्रतिपन्नबन्धुः।
श्रीपालनामा कविचक्रवर्ती प्रशस्तिमेतामकरोत् प्रशस्ताम् ॥

### गंगेशोपाध्यायः

अयं मैथिलब्राह्मणो नव्यन्यायस्य जन्मदाता। न्यायवैशेषिकदर्शनयोः सारमादाय चतुर्भागात्मकश्चिन्तामणिनामाऽद्वितीयो ग्रन्थराजोऽनेन ग्रथितस्तेन समस्तः संसार आक्रान्तः। अयं ख्रिस्तस्य १४ शताब्द्यामासीत्।

### अनंतः

अयं १४५६ ख्रिस्ताब्दे बभूव। आफ्रेटसाहबो वदति "केटलोगस केटलोगरम" नामके पुस्तके यदयमनन्तः कामसमूहकर्ता मालववादशाहाऽऽलमशाहमन्त्रिणो मण्डनस्य पुत्रः, किन्तु तस्यायं भ्रमः। कामसमूहकर्ताऽनन्तो ब्राह्मणो मण्डनस्तु

क्षत्रियः । मण्डनो जालोरनगरे बभूव, अनन्तोऽहमदाबादे । कामसमूहकर्ताऽप्यासीदवश्यमेव मण्डनतनुजः किन्त्वयमपरो मण्डनः ॥ अनन्तेन कामसमूहस्य सतीवृत्तप्रकरणे तथा स्त्रीसेवाविधिप्रकरणे स्वपरिचयोऽनेन प्रकारेण दत्तः—

"नागरज्ञातिजातेन मन्त्रिमण्डनसूनुना ।
अनन्तेन महाकाव्ये सतीवृत्तं प्रकाशितम् ॥"
"अहमदनिर्मितनगरे त्रिहितावसतिश्च वृद्धनागरिकः ।
मण्डनसूनुरनन्तो रचयति सेवाविधिं नार्याः ॥

## जयचंद्रसूरिः

अयं जैनकविर्ग्वालियराधिपतेस्तोमरवंशीयस्य राज्ञो वीरमस्य सभायामासीत् १४६० विक्रमाब्दे । अनेन 'हम्मीरमहाकाव्य' स्य रचना व्यकारि । अस्य रम्भामञ्जरी नाम्नी नाटिकापि प्राप्यते रचनेदृशी च---

पपात यत् पुष्करमत्र पाणेः ख्यातं ततः पुष्करतीर्थमेतत् ।
यज्ञायमानादथ चाहमान पुमानतोऽख्यायि स चाहमानः ॥
कलाविलासी जयति स्म तस्मात् सोमेश्वरोऽनश्वरनीतिरीतिः
कर्पूरदेवीति बभूव तस्य प्रिया प्रियाराधनसावधाना ।

## उमापतिधरः

अयं मैथिलब्राह्मणोऽभूत् ख्रिस्तस्य चतुर्दश्यां शताब्द्याम् । अस्य रचनाः सुभाषितावल्यां सन्ति. पारिजातहरणं तथा चन्द्रचूड़चरित नाम महाकाव्यद्वयं प्राप्यते । चन्द्रचूड़चरितकाव्यमाकर्ण्य राज्ञा चाणक्यचन्द्रेणास्मै बहु धनं ग्रामादिकं चार्पितमिति श्लोकेनानेन ज्ञायते—

निष्पन्ने सति चन्द्रचूड़चरिते तत्तन्नृपप्रक्रिया-
ज्ञातैः साधु मयातिराजकशिरोरत्नाञ्जलीनां त्रयम् ।

तप्तस्वर्णशतानि त्रिंशतिशती रूप्यस्य लक्षं त्रयम्,
ग्रामाणां शतमन्नसङ्कटक्षये चाणक्यचन्द्रो ददौ ॥

## सर्वानन्दसूरिः

अयं धनप्रभसूरेः शिष्यो जैनो विक्रमस्य १४ शताब्द्या अन्तिमे भागे बभूव । अनेन "जगडूचरित" नामकमेकं सप्त-सर्गात्मकं ३८८ श्लोकानां काव्यमलेखि । अस्मात् तदानीन्तन-वाणिज्य—व्यवसाय—समाजानां ज्ञानं शोभनं जायते । जग-डूवैश्यस्यैकासीत् प्रीतिमती नाम्नी कन्या, यस्या विवाहो यशो-देवेन सह बभूव, किन्तु स आशु पञ्चत्वमाप । जगडूः पुनर्विवाहं तस्या इयेष । अस्मिन सम्बन्धे सर्वानन्दसूरिर्वदति—

ततः स्वज्ञातिवृद्धानामनुमत्यैव धीमताम् ।
वराय दातुमन्यस्मै तनयामुपचक्रमे ॥
वृद्धे कुलाङ्गने दत्ते केचिद् वैधव्यदूषिते ।
शृङ्गारस्फारमाश्रित्य समूचुरिति स्फुटम् ॥
पुत्र्या वैधव्ययुक्ताया अपि चेद् वरमीहसे ।
तदाऽऽवयोरपि श्रीमन ! विधेहि वरवीक्षणम् ॥

## फीरोजशाहः

अयं फीरोजशाहः तुगलकनामा बादशाहः १३५१ त आरभ्य १३८८ ईसाब्दपर्यन्तं राज्यं चकार । दिल्लीसम्राट् मुहम्मदतुगलकोऽस्य पितृव्यपुत्रो ज्येष्ठभ्राता । अयं संस्कृतज्ञ आसीत् । अनेन फारस्यां श्रीमद्भागवतस्यानुवादः कृतः ।

बहूनां विचारे विद्याधरकृतराजावल्यास्तथा रघु-नाथकृतराजतरङ्गिण्या अप्यनुवादोऽनेन फारस्यां कृतः, किन्तु नैषा वार्ता सत्या प्रतीयते । तयोर्द्वयोः पुस्तकयोरनुवादको दाराशिकोहस्य मुन्शी बनमालीदास आसीद् यस्य १७१३ विक्र-माब्दः समयः ।

## लोकाचार्यः

अयं दक्षिणदेशीयः ख्रिस्तस्य चतुर्दशशताब्द्यामुत्पन्नः। अस्य पिता कृष्णपादः। अनेन तत्वत्रय-तत्त्वशेषरनामकं ग्रन्थद्वयं रचितम्। अयं प्रसिद्धः श्रीवैष्णवाचार्यः ख्रिस्तस्य १५ शताब्द्यां शरीरमजहात्। अस्य तत्त्वत्रयस्योपरि वरवरमुनेर्भाष्यमप्यधिगम्यते।

## वरदगुरुः

अयं वेङ्कटनाथस्य पुत्रः, वेदान्ताचार्यस्याधिकरणसारावल्याष्टीकाकर्तुः नयनाराचार्यस्य शिष्यः ख्रिस्तस्य चतुर्दशशताब्द्यामुत्पन्नः। अस्य द्वितीयं नाम "अञ्जन" आसीत्। अनेन वेङ्कटनाथस्य प्रशंसायां सप्ततिरत्नमालिका लिखिता। द्वितीयोऽस्य ग्रन्थः तत्त्वत्रयचुलुकसंग्रहः श्रूयते।

## शार्ङ्गधरः

अयं चतुर्दशशताब्द्यां 'भाट' वंशे समुत्पन्नः। 'रणथम्भोरनरेशहमीरसिंहदेवस्य सभायामसावासीत् प्रधानः कवीनां वैद्यानां च। शार्ङ्गधरपद्धतिः, शार्ङ्गधरसंहिता—इत्यस्य ग्रन्थौ। अनार्षत्वेऽपि शार्ङ्गधर—संहितायाः समादरः सुप्रचारः चिकित्सकेषु। अस्य रचनेदृशी—

शीताम्बुपूरितमुखः प्रतिवासरं यः कालत्रयेण नयनद्वितयं जलेन-
आसिञ्चति ध्रुवमसौ न कदाचिदत्र रोगव्यथाविधुरतां भजते मनुष्यः
श्रियं स दद्याद् भवतां पुरारिर्यदङ्गतेजःप्रसरे भवानी।
विराजते निर्मलचन्द्रिकायां महौषधीव ज्वलिता हिमाद्रौ॥

## जगद्धरः

भाण्डारकरस्य मतेऽस्य समयश्चतुर्दशशताब्दी। अनेनेत्थं दत्तः स्वपरिचयः—ब्राह्मणचण्डेश्वरमीमांसकस्य पुत्रा—

द्रामेश्वरमीमांसकाज्जातेन गदाधरेण जातो विद्याधरस्तस्य पौत्रोऽयं जगद्धरो रत्नधरपुत्रः । अस्य माता दमयन्तिका । अयं वेणीसंहार, वासवदत्ता, मालतीमाधवनाटकानां टीकाकारः, अस्य रचनेदृशी—

धन्याः शुचीनि सुरभीणि गुणोम्भितानि,
वाग्वीरुधः श्रवद्वनोपवनोद्गतायाः ।
उच्चित्य सूक्तिकुसुमानि सतां विविक्त-
वर्णानि कर्णपुलिनेष्ववतंसयन्ति ॥

सहैवालङ्कारः क्षितिपतनलग्नेन रजसा,
तथा दैन्यं नीता नरपतिशिरःश्लाघ्यविभवाः ।
यथालोपभ्रान्तिव्यवहितविवेकव्यातिकरो,
विलोक्यैनं लोकः परिहरति पाद्दत्तभयात् ॥

कृष्ण ! त्वदङ्घ्रियुगलाम्बुजभक्तिरेणु-
पुञ्जान्तरालपरिधूसरविग्रहोऽयम् ।
भृङ्गः कदा निजपतत्रविधूननेन-
मेतच्छरीरदुरितासरपातपटुभवेयम् ॥

## वाचस्पतिः

अयं ख्रिस्तस्य १५ शतकारम्भ आसीत् । अस्य पिता रणथम्भौरनरेशस्य हम्मीरस्य सभायां वैद्य आसीत् प्रमोदनामा, तथा ज्येष्ठभ्राता रैशर्मा अनेन माधवनिदानस्यातङ्कदर्पणनाम्नी टीकाऽलेखि, यत्रायमित्थं स्वपरिचयं ददाति—

श्रीहम्मीरनरेश्वरः समभवत् प्रौढप्रतापानल-
ज्वालाजालकरालदग्धपवमप्रारम्भारशुष्केन्धनः ।
तस्याभूद् वैद्यवरः प्रमुवि्श्वासपात्रं [illegible] ।

प्रमोदनामा सकलप्रमोदी, कलाविलासैकनिधिर्द्विजेन्द्रः ॥
ज्येष्ठोऽभवत्तस्य सुतः प्रशस्तशास्त्रार्थवेत्ता शिवसक्तचेताः ।
हैरामनामा प्रथितः कलाभि-र्महम्मदक्षोणिपतेः सभायाम् ॥
अन्यश्च तस्यासि सुतः कनीयान् वाचस्पतिः सत्त्वगुणैकसङ्गः
तेनोज्ज्वला विवृतिरल्पधियां हिताय ।
सम्बद्ध्यते विबुधमाधवसंग्रहस्य ॥
विज्ञाय तार्किकवरैकविचारवेद्यं
वैशद्यगुम्फनवशात्मधुरोषकं धम् ॥

## देवयाज्ञिकः

अयं कात्यायनसूत्रभाष्यकारोऽनन्तदेवस्य वंशजः ख्रिस्तस्य पञ्चदशे शतके पितृभूत्याचार्यानुयायी अभूत् । अस्य पिता नागरब्राह्मणः प्रजापतिः श्रीपतिगुरुश्च । प्रजापतिरग्निचयनत्रययज्ञकर्ता । देवयाज्ञिकः भाष्योपक्रमे स्वपरिचयमित्थं ददाति----

कात्यायनं नमस्कृत्य गुरून् श्रीश्रीपतीँस्तथा ।
पितरौ भाष्यकर्तॄंश्च पितृभूत्यादिसंज्ञकान् ॥
कात्यायनप्रणीतेऽस्मिन् सूत्रे यज्ञप्रकाशके ।
प्रजापतेस्तनूजोऽहं कुर्वे व्याख्यामिमां स्फुटम् ॥

"इति श्रीसम्राट्स्थपतिमहायाज्ञिकत्रिरग्निचित्—प्रजापतिसुत–याज्ञिकदेवकृते कातीयसूत्रभाष्ये प्रथमोऽध्यायः" ।

## महादेवद्विवेदः

अयं श्रौतसूत्रभाष्यकर्ता महादेवद्विवेदः सहस्रौदीच्य-ब्राह्मणः ख्रिस्तस्य पञ्चदशशतकेऽभूदिति श्रीधरशास्त्रिवारे-महोदया वदन्ति ।

## बोपदेवः

बोपदेवः स्वकीये कविकल्पद्रुमनामके ग्रन्थे स्वं द्रविड जातीयं स्वीकरोति । अयं तद्ग्रन्थानुसारेण केशववैद्यस्य पुत्रो धनेश्वरवैद्यस्य शिष्यः तथा वेदोपनामकः । अयं वैष्णवो देव गिरिभूपतेर्यादववंशीयस्य महादेवस्य मन्त्रिवरस्य चतुर्वर्ग-चिन्तामणिकर्तुर्महाविदुषो हेमाद्रेः सर्वश्रीकरणाध्यक्षपदभूषितस्य सभासद् । महादेवनृपते राज्यकालः १३४७ ईसाब्दे भवति । बोपदेवकृत—मुक्ताफलनामकग्रन्थस्य हेमाद्रिकृतटीकायां लिखितमस्ति यदयं षड्विंशतिग्रन्थानां रचयिता ; मुक्ताफलहेमाद्रिचतुष्टय एव रचितमिति बोपदेवेन स्वीकृतम्—

श्रीमद्भागवतस्कन्धाध्यायार्थादि निरूप्यते ।
विदुषा बोपदेवेन मंत्रिहेमाद्रितुष्टये ।

मुक्ताफलमेव भागवताश्रयं ग्रंथं रचितवानयमिति न, किंतु तत्रैवान्ते वदति "भागवततत्वोक्तौ त्रयः" एतेन निष्पन्नं ग्रंथद्वयमन्यदप्यस्ति बोपदेवस्य भागवतसम्बन्धि । तेऽप्यधिगच्छतो हरिलीलापरमहंसप्रियनामके । हरिलीलायां भगवतः श्रीकृष्णस्य चरितानि परमहंसप्रिया च श्रीमद्भागवतस्य टीका । अस्यां टीकायां भागवतस्यार्षप्रयोगाः संसाधितारछान्दसरीत्या । बोपदेवः स्वयमेवाध्यायान्ते वदति "इति श्रीमद्भागवते महापुराणे अष्टादशसाहस्रयां पारमहंस्य--संहितायां वैयासिक्याम् ।" अस्य रचनेदृशी —

पाद्मब्रह्मगृहीतचामरयुगो वाराहसंवीजितो,
ब्रह्माण्डेन धृतातपत्ररुचिरः स्कन्दादिभिः संयुतः ।
श्रीमद्वैष्णवसेवितानुगमनः सर्वेप्सिताभ्रंप्रदः ।
श्रीमद्भागवताभिधो विजयते सम्राट् पुराणव्रजः ॥

बोपदेवस्य कतिपयग्रंथाः—

१ मुक्ताफलम्, २ हरिलीला, ३ कविकल्पद्रुमः, ४ रामव्याकरणम्, ५ परमहंसप्रिया, ६ शतश्लोकचन्द्रिका, ७ मुग्धबोधव्याकरणम्, ८ काव्यकामधेनुश्च

## वल्लभदेवः

काशीकिन्सकालिस्य पण्डितपत्रेऽस्य समयः ११ त आरभ्य १४ शतकावधिः ख्रिस्तस्य निर्णीतः, किन्त्वयं दुर्घटवृत्तिरचयितुः शरणदेवस्य भ्राताऽतः ख्रिस्तस्यैकादश्यामेव शताब्द्यामयमासीत् अनेन न्यायलीलावती, माघकाव्यस्य वल्लभा टीका तथा सुभाषिताबली रचिता।

## हेमाद्रिः

दक्षिणदिग्वर्ति - देवगिरिनृपतेर्महादेवस्यासीन्महामात्यस्तलङ्गब्राह्मणोऽयं हेमाद्रिः। अस्य चतुर्वर्गचिन्तामणिनामा ग्रन्थः प्राप्यते। अस्य सभायां बोपदेव आसीद्यस्य मुक्ताफलस्योपर्यनेन टीका कृता। अयं ख्रिस्तस्य १४ शतब्द्यामासीत्। अस्य संकल्पो विश्रुतोऽस्ति। श्रूयतेऽनेन वाग्भट्टस्याष्टङ्गसंहितायाष्टीकालिखिताऽऽसीत्।

## दिनकरमिश्रः

श्रूयतेऽयं बौद्ध आसीत्। अनेन रघुवंशकाव्यस्य संस्कृते टीका लिखिता। अस्य समयः १३८५ ईसाब्दः। अनेन मुक्तावल्या दिनकरीनाम्नी टीकाऽकारि।

## आढमल्लः

अयं ख्रिस्तस्य १५ शतक आसीत्। अस्य पिता भावसिंहः पितामहश्च चक्रपाणिः। आढमल्लः श्रीवास्तव्यकायस्थः! अस्य

पूर्वजाः पुरा हम्मीरस्य पुरे रणथम्भौरे वसन्ति स्म पुनश्चम्बल-तटवर्तिन्यां हस्तिकान्तिपुर्यामागताः । आढमल्लस्य समये तस्याः शासको जैत्रसिंह आसीत् । अनेन शार्ङ्गधरसंहितायाः दीपिका-नाम्नी टीकाऽलेखि । अत्र स्वपरिचयमयमित्थं ददाति—

श्रीवास्तव्यकुलप्रकाशमणयो ये पूर्वजा विश्रुताः ।
श्रीहम्मीरपुरे महाजनतते येषां स्थितिः कथ्यते ॥
तदन्वये किं बहुना प्रसिद्धः श्रीचक्रपाणिः किल कैरवेन्दुः ॥
तस्य बुद्धिशुभगस्य तनूजो भावसिंह इति भूपतिमान्यः ।
सुश्रुतादिकरहस्यविधिज्ञो यो यशांसि विपुलानि च लेभे ॥
तस्यात्मजो दीर्घमतिः प्रहृष्टो नाम्नाऽऽढमल्लोऽल्पनिबन्धदर्शी ।
तेन स्वगुर्वर्चनतत्परेण, विधास्यते शार्ङ्गधरप्रकाशः ॥

हस्तीकान्तिपुरी पुरा पुरजिता काशीव विद्वज्जनै-
र्व्याप्ता यत्र सरः सरिद् गुणवरा चर्मण्वती पापहा ।
यस्यां हृद्गतवासुदेवचरणद्वन्द्वाम्बुजः क्ष्मापतिः,
ख्यातो धर्म इवास्ति धर्मगतिषु श्रीजैत्रसिंहः प्रभुः ॥

## वेंकटनाथः

श्रीरामानुजाचार्येण दिग्जैत्रयात्रावसरे ये ७४ पीठास्त-त्तत्स्थानेषु श्रीविशिष्टाद्वैतसम्प्रदायस्य प्रचाराय संस्थापि-तास्तदध्यक्षाः सिंहासनाधिपतय उच्यन्ते । एष्वेकोऽनन्तसोम-याजी । अयमेव वेंकटनाथस्य पितामहः, पिता अनन्तसूरिः । माता च कस्यचित् सिंहासनाधिपतेः कन्या तोतारम्बा । अयं कांच्याः समिपवर्तिनि थूपिलग्रामे १३३५ विक्रमाब्दे बभूव । अनेन स्वमातुलस्य वादिहंसाम्बुवाचार्यस्य समीपे २० वर्षा वस्थायामेव सर्वा विद्या अधिगताः । अयं तिरूपाहीन्द्रपुरमा-गत्य कांश्चिद् ग्रन्थान् निर्माय वेदान्ताचार्यपदव्याऽलंकृतः । सर्वतन्त्रस्वतन्त्रोऽयमेकदा केनचित् कूपखननाय कथितो मं

कूपं निर्मितवान्, सोऽधुनाऽपि तत्रैव विद्यते। तिरूपाहीन्द्रपुरं परित्यज्य सज्जनैराकारितः श्रीरङ्गमाजगाम। १३६७ विक्रमाब्दे मुसल्मानैराक्रान्ते श्रीरङ्गे सुदर्शनाचार्ये च हतेऽयं तद्बालकद्वयमादाय सत्यकालमिति स्थाने सोपवीतं कृत्वाऽध्यापयत्तिष्ठम।

विजयनगरराज्यसंस्थापकेन विद्यारण्यस्वामिनाऽस्य मित्रेण १४२२ विक्रमाब्दे मुसल्मानाः श्रीरङ्गतो बहिष्कृतास्तदायं पुनः श्रीरङ्गमागतः। श्रीरङ्गभगवन्मूर्तेः स्थापनाऽवसरेऽनेन निर्मिताः केचन श्लोका अधुनाऽपि मन्दिरशिलासु लिखिता वर्तन्ते। अयं परमो विरक्तो विद्वानासीत्। कवितार्किकसिंहस्यास्य १०८ ग्रन्थाः श्रूयन्ते, तेषु प्रसिद्धाः केचन गरुडपञ्चशती, अच्युतशतक, रघुवीरगद्य, संकल्पसूर्योदय, अभितिस्तव, तत्त्वमुक्ताकलाप, यादवाभ्युदय, अधिकरणसारावली, न्यायपरिशुद्धि, न्यायसिद्धाञ्जन, शतदूषणी, तत्त्वटीका, वादित्रयखण्डनादयः सन्ति। अनेन १४२६ विक्रमाब्दे १०२ वर्षावस्थायां शरीरत्यागः कृतः। अस्य रचना—

कर्मावलम्बकाः केचित् केचिद् ज्ञानावलम्बकाः
वयं तु हरिदासानां पादपद्मावलम्बकाः॥

सिद्धं तत् सम्प्रदाये स्थिरधियमनघं श्रोत्रियं ब्रह्मनिष्ठं,
सत्त्वस्थं सत्यवाचं समयनियतया साधुवृत्त्या समेतम्।
दम्भाऽसूयादिमुक्तं जितविषयगणं दीनबन्धुं दयालुं,
स्खालित्ये शासितारं स्वपरहितपरं देशिकं भूष्णुरीप्सेत्॥

## पुरुषोत्तमदेवः

अयं कलिङ्गपतिः ओरसाजातीयः क्षत्रियः। अस्य राजधानी कटक आसीत्। अयं शालिवाहनस्य १४ शकाब्दे बभूव। कटकप्रदेशो बङ्गसमीपवर्ती। बङ्गे भगवद्भक्तिप्रचार-

मधिकमवलोक्य परमभागवतं कलिङ्गपतिं नानार्थसंग्रहभूमिकायामानन्दरामो हलायुधवंश्यं बङ्गदेशीयं वदति १२ ख्रिस्ताब्द उत्पन्नम्। राजेन्द्रलालमित्रं "नोटिसेस् आव संस्कृत म्यानुस्क्रिप्स" पुस्तके ११ शताब्द्या उत्तरार्धे स्वीकरोति। अयं कुत्रचित् पुरुषोत्तम इति लिखति कुत्रचिच्च पुरुषोत्तमदेवः अतो बहूनां विचारेऽत्रैको जैनोऽपरः क्षत्रियः किन्तु सोऽस्ति क्षत्रिय एवं। अयं पित्रोर्विषये वदति विष्णुभक्तिकल्पलतायाम्

माली माता पिता विष्णुर्यस्याख्यः पुरुषोत्तमः।
विष्णुभक्तिलताकल्पकं सतां चक्रे कृताञ्जलिः॥

अस्य ग्रन्थेषु विष्णुभक्तिकल्पलता, त्रिकाण्डशेषः, हारावली, नानार्थसंग्रहभूमिका इत्यादयो ग्रन्था: श्रूयन्ते। अस्य रचनेदृशी—

उपनिषदपि लेभे नैव साक्षाद् यदन्तं,
न च वचनमनोभिर्योगिनो बद्धिवासः।
शिथिलितभवबन्धा जन्तवो यस्य नाम्ना,
हृदि तमभिनिबद्धं राधयाऽऽराधयामः।
अथ हृदय रमायाः कान्तमन्यत्र मा याः,
न धनतनयजायाः श्रेयसां सम्प्रदायाः।
व्यवहृतिमदुपायाः सर्वतस्तेऽन्तरायाः,
शमनशयगतं को रक्षिता त्वामपायात्॥
हरिणचरणमात्रं कामिनीनां प्रतीकं,
कमपि कलयतस्ते कोट्योऽगुयुंगानाम्।
परिणतिरसवत्ता यत्र नैवानुभूता,
प्रथमपदमितस्तद्भोहि मुक्त्वा समाधम्॥
त्वदपि भुवनमध्ये को वदान्यो वदान्यो,
नहि परपरिलभ्यं देव विश्वम्भरत्वम्।

इदमहमभियाचे तद्विहाय त्वदंघ्री ,
क्वचन चरतु चेतो मामकं मा मुकुन्द ॥

## पक्षधरमिश्र ।

अयं ख्रिस्तस्य १५ शतके बभूव । अस्मिन्नियं विशेषताऽऽसीद्यदयं शास्त्रार्थे यस्य पक्षं धरति स्म स एव विजयी भवतिस्म . अतोऽयं पक्षधरोपाधिमधिगतवानित्यनुमीयते । नामास्य प्रायः किञ्चिदन्यदेवासीत् । अयं श्रूयते क्वचिदपि पराजितो न बभूव । अत्र विषये मिथिलायामेकः श्लोकः प्रथितः—

शङ्करवाचस्पत्योः शङ्करवाचस्पती सदृशौ ।
पक्षधरप्रतिपक्षी लक्ष्यीभूतो न भूतले क्वापि ॥

अयं मैथिल आसीत् विद्यापतिठक्कुरस्य समकालिकः । मैथिलेषु किम्वदन्तीयं प्रसिद्धा यदेकदा पक्षधरमिश्रो नक्तं विद्यापतेरतिथिशालायामेकस्मिन् कोणे दीपप्रकाशे किंचिल्लिखति स्म । तत्रागतेन विद्यापतिठक्कुरेण प्रभोज्ज्वलमुखमण्डलोऽयं दृष्टः कथितश्च व्यङ्ग्यभरितः श्लोकस्तदुत्तरमपि पक्षधरेण तदैव तथैव दत्तम् । सोऽयम्—

वि०-आघूर्णः घूर्णवत् कोणे सूक्ष्मत्वान्नैव लक्ष्यते ।
प- नहि स्थूलधियां पुंसां सूक्ष्मा दृष्टिः प्रजायते ॥

श्लोकस्योत्तरार्धमाकर्ण्य विद्यापतिठक्कुरश्चिन्तयामास यन्मद्वाग्मोधी किमयं पक्षधरमिश्रः श्रुतपूर्वः ? इति विचार्य परिचर्याधिया तदन्तिके गत्वा सम्बोधयंस्तमाह, भ्रातर्मया न वार्तं यत् त्वमेवासि पक्षधरमिश्रः ।

वङ्गस्य प्रसिद्धो विद्वान् रघुनाथशिरोमणिः पक्षधरस्य सविधे विद्यामध्येतुमाजगाम । एकदा शिरोमणेर्वङ्गीयेन गुरुणा वासुदेवसार्वभौमेनास्यान्तिके लिखितैकान्योक्तिरियम्—

अपि दिवसमनैषीः पद्मिनीसद्मनि स्थो,
रजनिषु निरतोऽभूः कैरविण्यां रमण्याम् ।
कथय कथय भृङ्ग ! स्वच्छभावेन तावत्,
किमतिसुखमवाप्सीरत्र वा तत्र वेति ॥

मत्तस्तत्र किमधिकं प्राप्यत इति धिया लिखितामन्योक्तिमधीत्य रघुनाथस्तदन्तिके श्लोकममुं लिखितवान् येन परिज्ञायते पक्षधरस्यात्यधिकं पाण्डित्यम्—

त्वं पीयूषदिवो विभूषणमसि द्राक्षे ! परीक्षेत कः,
माधुर्यं तव विश्वतोऽपि विदितं साध्वीकमाध्वीकता ।
किन्त्वेकं त्वपरं त्वदन्तिकमपि ब्रूमो न चेत् कुप्यसे,
यत् कान्ताधरपल्लवे मधुरिमा नाऽलक्षि कुत्रापि सः ॥

## रामचन्द्राचार्यः

अयं प्रक्रियाकौमुद्याः कर्ता ख्रिस्तस्य १५ शतके बभूव । अयमेव विचारो वेलकरमहोदयस्यापि । अस्य पौत्रेण विठ्ठलेन प्रक्रियाकौमुद्याः प्रसादाभिधा टीका खिस्तस्य १६ शतके लिखिता ।

## चूडामणिः

अयं रसकामधेनुनामकरसायनग्रन्थस्य कर्ता यत्र धातुसंग्रहपादे ३६२, ३६३ श्लोकयोर्गोरक्षनाथमतमुद्धृतम्, तेन परिज्ञायते स्थितिकालोऽस्य ख्रिस्तस्य १५ शताब्द्याम् । अस्य पिता शाकद्वीपीयो ब्राह्मणो हरिराममिश्रः पितामहश्च बलभद्रमिश्रः । अस्य स्थानं न ज्ञायते । अयं रसकामधेन्वन्ते स्वपरिचयमित्थं ददाति—

शाकद्वीपजविप्रमुख्यसुभिषक् संख्यावदाख्यातिम-
न्मिश्रश्रीवलभद्रसूनुहरिरामस्यात्मसम्भूतिना, ।

श्रीचूडामणिना कृते सुकृतिना प्रसूतक्रियासंश्रिते,
ग्रन्थेऽस्मिन् रसकामधेनुकथिते पादस्तृतीयो मया ॥

चूडामणिना ग्रन्थेऽस्मिन् प्रमाणकोटौ स्वकृतौ भावचिन्तामणि, अभिधानकामधेन्वाख्यौ ग्रन्थावुपन्यस्तौ किन्तु साम्प्रतमिमौ द्वावप्यनुपलब्धौ वर्तेते ।

## रघुनाथशिरोमणिः

अयं १४७७ ख्रिस्ताब्दे नवद्वीपे बभूव । अस्य पिता बाल्य एव मृतो माता च निर्धनदशायां जीवनं यापयति स्म । अयं बाल्य एवासीद् बुद्धिमान् । अस्याध्ययनप्रबन्धं कश्चिदध्यापकश्चकार । अयमभूत् प्रसिद्धो विद्वान् । स्वयोग्यता प्रकटनाय मिथिलामागत्य पक्षधरमिश्रमाशिश्रयत् । अयमासीदेकाक्षोऽतः केनचिदाक्षिप्तोऽपि—

सुरेन्द्रोऽस्ति सहस्राक्षो महादेवस्त्रिलोचनः ।
द्विनेत्रा मानवाः सर्वे त्वमेकाक्षः कथं रघो ! ॥

अनेन नवद्वीपविद्यालयस्योत्कर्षाय महापरिश्रमोऽकारि । गङ्गेशोपाध्यायप्रणीततत्वचिन्तामणेः परमोपासकस्तत्प्रसाराय बहुप्रयत्नं कृतवान् ! अयं गुरुणा वासुदेवसार्वभौमेन रचितं तत्वचिन्तामणेर्भाष्यं सार्वभौमनिरुक्तनामकं व्यर्थं प्रख्याप्य स्वयं विवेचनात्मकं दीधितनामकं व्यरचयत् । दीधितिगौरवमवलोक्य यशोविजयेनोक्तमिदम्—

न्यायाम्बुधौ दीधितिकारयुक्तिकल्लोलकोलाहलदुर्विगाहः ।
तस्यापि पातुं न पयः समर्थः, किं नाम धीमत्प्रतिभाम्बुग्राहे ॥

रघुनाथशिरोमणिर्नानादेशागतच्छात्रानध्यापयन् न्यायशास्त्रस्य परमं प्रचारञ्चकार । अस्य प्रतिभया भारतीया नैयायिकाः प्रभाविहाना जाताः । अयं परमविमर्शको भाष्यकारश्चासीत् । अस्य ग्रन्थाः—

१ अवयवग्रन्थिः, क्षणभङ्गुरवादः, आख्यातवादः, प्रामाण्यवादः, ५ आकाङ्क्षावाद ६ अद्वैतेश्वरवादः, ७ पक्षता, ८ ब्रह्म सूत्रवृत्तिः, ९ तत्वाचिन्तामणिदीधितिः, १० न्यायकुसुमाञ्जलिटीका, ११ लीलावतीटीका, १२ पदार्थमण्डलम्, १३ केवलव्यतिरेकी,

## लीलाशुकः

अयं ख्रिस्तस्य १५ शतके वृन्दावन आसीत्। अस्य कृष्णकर्णामृतं नाम काव्य प्राप्यते। अस्य मनोहरा रचनेदृशी—

प्रातः स्मरामि दधिघोषविधूतनिद्रं, निद्रावसानरमणीयमुखारविन्दम्।
हृद्यानवद्यवपुषं नवनीतचौरमुन्मीलिताब्जनयनं नयनाभिरामम्॥

कालिन्दीपुलिनोदरेषु मुसली यावद् गतः खेलितुं,
तावत् कर्बुरिकापयः पिव हरे! वर्धिष्यते ते शिखा।
इत्थं वालतया प्रतारणपराः श्रुत्वा यशोदागिरः,
पायाद् वः स्वशिखां स्पृशन् प्रमुदितः क्षीरेऽर्धपीते हरिः॥

वृन्दावनद्रुमतलेषु गवां गणेषु, वेदावसानसमयेषु च दृश्यते यत्।
तद् वेणुवादनपरं शिखिपिच्छचूडं, ब्रह्म स्मरामि कमलेक्षणमभ्रनीलम्॥

## महेश्वरः

अस्य सप्तसर्गात्मकं काव्यमनोहरं नाम काव्यं प्राप्यते। इदं मालवेशमन्त्रिमण्डनस्य तोषाय तेन कृतमित्यनेन श्लोकेन प्रतीयते—

"एवं विधं काव्यमनोहरं वै, महेश्वरेणात्समतिप्रभावात्।
अकारि यत्नेन महीयसेदं श्रीमण्डनेन्द्राय विदेऽभिधातुम्॥"

सप्तमे सर्गे मण्डनस्य दीर्घायुष्ट्वायापि प्रार्थना कृता अतो वक्तुं शक्यते यदयं मण्डनमन्त्रिकालिकः १५०५ विक्रमाब्द

आसीत् किन्तु नेति वक्तुं शक्यते कुत्रत्य: । अनुमीयते मण्डनाद् द्रव्यमाप्तुं तेन तदुपरि काव्यं निर्मितं किन्तु माण्डूनिवासी नासीत् । अनेन मण्डनचरितं श्रुत्वैव लिखितमतो भ्रान्तिपूर्णं वर्तते । काव्येऽस्मिन् मण्डनस्य दानसम्बन्धिनी चर्चा तु विद्यते किन्तु राज्यचालन-ग्रन्थलेखनविषयिणी न । मण्डनस्य विवाह: पत्नी श्वसुरो बहुधाऽत्र वर्णित: किन्तु न पत्न्या नामास्ति न श्वसुरस्य । महेश्वरेण मण्डनभ्राता समुद्र: कथितो यश्च मण्डनेनोच्यते समधर: । अस्यां दशायामपि महेश्वरेण यत् काव्यं कृतं तदितिहासज्ञानामसन्तोषायैव । अयं मण्डनस्य प्रशंसायां वदति—

"मध्ये सभं सन्ततमास्थितोऽयं शृणोति सर्वांस्तु फलाविशेषान् ।
स्तुत: प्रबन्धै: कविभि: सुकाव्यैर्गाथादिभि: प्राकृतिकैरुदारै: ॥
बुधैस्तु नैयायिकमुख्यवर्गैर्वैशेषिकैर्भाट्टविशेषविज्ञै: ।
वेदान्तविद्भि: स्तुत एष सांख्यै: प्राभाकरै: सन्ततमेव बौद्धै: ॥
स्तुतस्तथांशं गणितज्ञकैस्तु भूगोलविद्भि: शकुनाभिरामै: ।
प्रश्नप्रभेदै: सुमुहूर्तविज्ञै: पाटीबृहज्जातककोविदैश्च ॥
देशर्तुकालप्रकृतिप्ररोगवयश्चिकित्साऽखिललक्षणज्ञै: ।
असाध्यसाध्यादिरसक्रियाज्ञैर्वैद्यै: सभायां खलु सेव्यतेऽसौ ॥
साहित्यविद्भि: पतिनायकादिप्रवेशसल्लक्षणकोविदैश्च ।
सुभावशोभिप्रियकेलिजाग्रद्विलासवद्भि: स्तुतिभि: स्तुत: स: ॥
निषादमुख्यस्वरगायनैश्च लघुद्रुतादिप्लुततालभेदै: ।
श्रीरागपूर्वप्रथितादिरागोल्लसन्मतै: सेव्यत एष एभि: ॥

## रुद्रदेव:

अयं चन्द्रदेव:, रुद्रचन्द्रदेव इति नाम्नाऽपि प्रसिद्ध: । अनेन श्यैनिकशास्त्रस्य रचनाऽकारि । महामहोपाध्याय पं०

हरिप्रसादशास्त्रिणो विचारे "त्रैवर्णिकधर्मनिर्णय' नामाऽपरो ऽप्यस्य ग्रन्थः। बालटनसाहवोऽल्मोड़ागजटे वदति यद् रुद्रदेवः कल्याणचन्द्रस्य पुत्रोऽल्मोड़ावास्तव्य आसीन्नरपतिः। श्यैनिकशास्त्रस्य प्रथमपरिच्छेदान्ते रुद्रदेवो वदति—

"इति श्रीकूर्माचलाधिपतिरुद्रदेवविरचिते श्यैनिके शास्त्रे कर्म्मानुवञ्जनः प्रथमः परिच्छेदः"। रुद्रचन्द्रदेवः १५५६ ईसाब्दे बभूव। १५७५ खिस्ताब्दे लखनऊ हाकिमः कुमायूं प्रदेश माक्रान्तवान् किन्त्वनेन पराजितः। पराक्रमेण तुष्टोऽकबरोऽमुं लाहोरे निमन्त्रितवान्। अयं तत्र गत्वा तदाज्ञया नागौरं विजित्य चौरासीमालनाम्नीं नौलख्यापराख्यां भूमिं प्राप्तवान्। अनेन मृगयायाः परमा प्रशंसा कृता सर्वत्र स्वग्रन्थे। अस्य रचनेदृशी—

धर्मद्र ुमस्य फलमर्थमुदीरयन्ति, शास्त्रेषु निश्चितधियो हि यथागमेन।
तद्दानभोगविषये सुजनो नियुङ्क्ते, सम्यक् तयोः परिणतिः सुखमभ्युपैति॥

यथा प्रसह्य मानिन्याश्चुम्बनालिङ्गनादिकम्।
आयाससाध्यमप्यन्तर्न नाम मुदमञ्चति॥
प्रहारो नखदन्ताद्यैर्यथैव स्मरसङ्गरे।
उपघातस्तथैवात्र रसावेशान् न वा रुजे॥
ये नाट्यबन्धकुशलैर्वितत प्रपञ्चैः,
सन्दर्शिताः किल रसाः समयं विभज्य।
एकत्र ते समकमेव रसा अमूर्ता,
दृश्यन्त एव कृतिभिर्मृगयाविहारे॥
वागुराभिश्च कूटैश्च पाशैश्च विविधा नराः,
प्रतिच्छन्ना अरण्याश्च गृह्णन्ति बहवोऽद्भुतम्।
विध्यन्त्यभिमुखांश्चापि मृगयाधर्मकोविदाः॥

## क्षेमशर्मा

अयं १५०५ विक्रमाब्दे विक्रमसेन नृपतेः समय आसीत्। अयमकोलाग्रामवासी सनाढ्यब्राह्मणः। अस्य पिता नरवैद्य-मन्मथः। अनेन क्षेमकुतूहलनामकं पाकशास्त्रं निर्मितम्। क्षेम-कुतूहलेऽस्य समय इत्थं वर्तते—"बाणाकाशसुते नाब्दे १५०५ वत्सरे विक्रमाङ्किते" इति। अयं वदति—

गौरीमतं चरकवाग्भटडल्लनोक्तीर्हारीतसुश्रुतमतं रविसिद्धपाकम्।
क्षेमो भिषग्वरसुधीरवलोक्य सम्यग् ग्रन्थं व्यधत्त खलु क्षेमकुतूहलाख्यम्

## आलमशाहः

अयं मालवप्रदेशान्तर्गतमांडूनगरनिवासी बादशाहः। अयं १५०५ विक्रमाब्दे आसीत्। अस्य मन्त्रिणा मण्डनेनास्य वैदुष्यं स्वग्रन्थेषु प्रकटीकृतम्। अस्यैवाज्ञया बाणभट्टस्य कादम्बरी मण्डनेन संक्षिप्ता कथिता। अस्य प्रशंसायां मण्डनः शृङ्गारमण्डने वदति...

प्राचीनाः प्राक्चीना अपि कपिकुलवद्दाक्षिणात्याः क्षणात्याः,
क्षोणीः क्षोणीमहेन्द्रा विजहति हतिभिर्जजरा गुर्जराश्च।
अन्ये मन्ये नमन्ये चलचलनिलयाः किञ्च सर्वेऽप्यगर्वाः,
यस्मिन्नालम्मसाहिक्षितिभृति विहितप्रस्थितौ दिग्जयार्थम् ॥

## मण्डनः

जालौरनगरे श्रीमालगोत्रे १२३६ विक्रमाब्दे बभूवैक आभूनामा विद्वान् सोमेश्वरनृपतिमन्त्री क्षत्रियः। अस्य पुत्रो-ऽभयदो बभूव गुर्जरनृपतेरानन्दस्य मन्त्री। अस्य पुत्रो बभूव बीसलदेवोपनामकस्य चतुर्थविग्रहराजस्य मन्त्री आवड़ः। आवड़स्य पुत्रः सहणपालस्तस्य नैणाः, तस्य दुसाजुस्तस्य

वीका तस्य च पुत्रो बभूव नन्दोलनृपतेर्गोपीनाथस्य । मन्त्री झंझणः । अस्य द्वितीयः पुत्रो वाहड़स्तस्य पुत्रो बभूव मण्डनः १५०५ विक्रमाब्दे गङ्गादेवीगर्भजः । मण्डनसमकालि-केन महेश्वरकविना काव्यमनोहरेऽस्य महती प्रशंसा कृता, यथा—

जाग्रद्व्याकरणश्च नाटकशुभालंकारविज्ञस्तथा,
संगीतातुलकोविदः प्रविलसद्गंभीरशास्त्रार्चितः ।
चातुर्यैकनिधानभूमिरतुलैः प्राप्तोन्नतिः सद्गुणैः,
श्रीमालान्वयवर्धनोऽमलमतिः श्रीमण्डनो राजते ॥

अयं जैनसम्प्रदायान्तर्वर्तिखरतरगच्छाचार्यजिन-राजसूरिशिष्यजिनभद्रसूरिशिष्य आसीत् । अनेन स्वगुरो-राज्ञया सिद्धान्तकोषनामा पुस्तकालयः स्थापितः । मण्डनो मालवनृपतेर्हुशंगगोरीनाम्ना ख्यातस्यालमशाहस्यासीन्मन्त्री । अयं बादशाहः संस्कृतज्ञ आसीत् । अस्यैव तोषाय मण्ड-नेन कादम्बरीदर्पण, चन्द्रविजयादिकाव्यानां रचना कारि । आस्फेटसाहवेन "केटलोगरस केटलोगम" नामके पुस्तके अस्य ग्रन्थानामियं सूची दत्ता—

१ कादम्बरीदर्पणम्, २ चम्पूमण्डनम्, ३ चन्द्र विजयप्रबन्धः, ४ अलङ्कारमण्डनम्, ५ काव्यमण्डनम्, ६ शृङ्गारमण्डनम्, ७ सङ्गीतमण्डनम्, ८ उपसर्गमण्डनम्, ९ सारस्वतमण्डनम्, १० कविकल्पद्रुमस्कन्धः ।

अस्य रचनेदृशी—

प्राचीं विहाय प्रथमोपपन्नां प्राप्तं सरागं प्रतिगृह्य पूर्वम् ।
वेश्येव कृत्वा विवसुं क्रमेण विवासयामास विधुं प्रतीची ॥

यथा चरन् येन पपात पूषा तमेव दैवात् समुपेत्य भूयः ।
पपात चन्द्रोऽपि परं पतिष्णोर्नरस्येद्विवेको ननु जानतोऽपि ॥

## गोरक्षनाथः

अयं ख्रिस्तस्य पञ्चदशशताब्द्यां जयश्रीग्रामे बभूव । एकदा मत्स्येन्द्रनाथोऽत्रागत्यैकस्यै खिन्नायै ब्राह्मण्यै पुत्रार्थं विभूतिं दत्तवान् सा तां भूमौ चिक्षेप । द्वादशे वत्सरे स पुनरागत्य भूमेः पुत्रमेकं द्वादशवार्षिकं प्राप्तवान्, तञ्च गोरक्षनाथनामानञ्चकार । मत्स्येन्द्रनाथेनायं स्वशिष्यत्वे नीतः । अयं योगबलेन चिरञ्जीवीकृतः । अस्येमे ग्रन्था—१ गोरक्षकल्पः, २ गोरक्षसंहिता, ३ गोरक्षसहस्रनाम, ४ गोरक्षशतकम्, ५ गोरक्षपिष्टिका, ६ गोरक्षगीता ७ विवेकमार्तण्डश्च ।

## गुणाकरः

अयं श्वेताम्बरजैनः । अस्य पिता गुणचन्द्रसूरिः । अनेन भक्तामरस्तोत्रटीका लिखिता । अयं १४२६ विक्रमाब्द आसीत्, यथाह टीकान्ते—

वर्षे षड्विंशाधिकचतुर्दशशतीमिते च वर्षतौं ।
मासि नभस्ये रचिता सरस्वतीपत्तने विवृतिः ॥

## नारायणः

अयं १४९३ शकाब्द आसीत् । अस्य पिता कुशिकगोत्रजो हरिपुत्रोऽनन्तः । देवगिरेरुत्तरस्यां दिशि घुश्मेश्वर नामकं ज्योतिर्लिङ्गं वर्तते । तदुत्तरवर्तिनि टायरनामके ग्रामे नारायणो जातः । अनेन मुहूर्तमार्तण्डनामा ज्योतिर्ग्रन्थः सटीको व्यलेखि । अस्य रचना—

शुद्धां गोत्रकुलादिभिर्गुणयुतां कांतां वरश्चोद्वहेत्,
वर्णो वश्यभयोनिखेचरगुणाः कूटं च नाडीक्रमात् ।
वर्णाद्या कलिनो यथोत्तरमहीन्पूर्वं गुणैक्यं शुभम्,
वर्णा विप्रमुखा झषादिहि वशो वर्णोत्तमः स्याच्छुभः ॥

कविचन्द्रः

अस्य पिता विद्याविनोददत्तोपनामा कविकर्णपूरो वैद्यः। विद्याविनोदः १५०० शकाब्द आसीत्। कविचन्द्रेण रत्नावली-नामा वैद्यकग्रन्थो व्यरचि। साहित्येऽस्य रामचन्द्रचम्पूग्रन्थो-ऽप्यस्ति ।

धनराजः

अस्य शतकत्रयं प्राप्यते। अयं १४६० विक्रमाब्द आसीत्। अस्य पिता गोरीवंशीयजालिमशाहस्य नीतिदो देहड़ः श्रीमालीजनः। अस्य रचनेदृशी—

आलस्योपहतः स्मरातुरमना दैवप्रमाणो धने,
भीरुः वातरसज्ञतो बहुगुरुः पुत्रप्रियो मन्दधीः ।
निद्रालुर्बहुभीषणोऽतिमुखरः पानप्रियोऽहंकृतः,
शत्रोः पौरुषगायकः प्रतिवचो दाता च नो सेवकः ॥
लुप्तश्चन्दनबिन्दुरञ्जनरसः पीतोऽनुलेखो गतो,
निःशेषेण कपोलयोः कुचयुगे शेषो नखयोः कृतः ।
दग्धेयं सखि मध्यभागतनुता पद्मजभीरुः प्रियो,
गाढश्लेषपराङ्मुखी रतिविधौ तुष्टः कदाचिद् यदि ॥
सूक्ष्मं सूक्ष्मं विचिन्त्यन्नुचितमनुचितं कर्म जन्तोरनिद्रो,
मन्ये वृद्धः कृतान्तो घनतिमिररुजाक्रान्तनेत्रप्रकाशः ।
एवं चक्षुर्निमील्याहनि तु शशधरं पश्यति प्रेतजातं
रात्रावर्कं कथञ्चित् कलयति सकलं विश्वकस्तु प्रमोदात् ॥

## कर्णपूरः

भक्तिर्भागवतस्य माघसुकृतेः श्लिष्टास्त्रयस्ते गुणाः
पाण्डित्यं किल कैय्यटस्य सकलं तन्मम्मटाभूषणम् ।
अस्मिन्नेव समाप्यतेऽतिविशदा बाणस्य गद्यच्छटा
चम्पौ श्रीकर कर्णपूरसुकवेरानन्दवृन्दावने ॥

चैतन्यचरितामृतमहाकाव्ये महाकविकर्णपूररचितेऽस्य कवेः परिचयो वर्तते, यः किलानन्दवृन्दावनारम्भ एव टीकायामुद्धृतः । अस्य कवे सम्पूर्णं नाम परमानन्ददास इति । अयं किल वैद्यवंशीयशिवानन्दसेनस्य नदियाप्रान्तवर्तिन्यां काञ्चनपत्न्यां जन्म लेभे । एकदा महाप्रभुश्चैतन्योऽस्य मुखे बालकस्य दक्षिणचरणांगुष्ठं चिक्षेप । अथ जाग्रताऽस्य सरस्वती । अयं भगवदादेशात् सत्वरं पपाठेति—

श्रवसोः कुवलयमक्ष्णोरञ्जनमुरसो महेन्द्रमणिदाम ।
वृन्दावनतरुणीनां मण्डनमखिलं हरिर्जयति ॥

श्लोकेऽस्मिन्नादौ "श्रवसोः कुवलयम्" कर्णाभरणवाचक श्रुत्वा भगवांश्चैतन्यस्तदपरं नाम "कर्णपूरः" इति कृतवान् । एषा किम्वदन्ती सत्योतासत्येति भगवान् वेत्ति, किन्तु कर्णपूरो महाकविः ।

अस्य ग्रन्थानामध्ययनेन ज्ञायते यदयं श्रीकृष्णचैतन्यगौराङ्गस्य समकालिकः । चैतन्यकालस्तु वङ्गदेश इत्थं प्रसिद्धः—

शाके मुनिव्योमयुगेन्दु १४०७ गण्ये शुभोदये फाल्गुणपौर्णमास्याम् ।
त्रैलोक्यभाग्योदयपुण्यकीर्तिः प्रभुः शचीनन्दन आविरासीत् ॥

परन्तु कर्णपूरस्य रचनाकालो महाप्रभोर्महाप्रस्थानानन्तरमनुमीयते, यतोऽनेनानन्दवृन्दावने लिखितं 'गते स्वस्वाभीष्टं पदमहह चैतन्यभगवत्परी" त्यादि अथास्य पिता शिवानन्दसेनो महाप्रभोः शिष्यः। एतेनापि ज्ञायते यदस्य जन्म १५२४ ख्रिस्ताब्दे बभूव। अस्य जन्मसम्बन्धे प्रसिद्धिरप्येषैव। अस्य ग्रन्थाः—

आनन्दवृन्दावनचम्पूः, चैतन्यचरितामृतमहाकाव्यम्, अलङ्कारकौस्तुभः, आर्याशतकम्, चैतन्यचन्द्रोदयनाटकम्, वर्णप्रकाशकोषः, कृष्णलीलोद्देशदीपिका, गौरगणोद्देशदीपिका, चमत्कारचन्द्रिका च श्रूयते, किन्तु नाद्यावधि चमत्कारचन्द्रिकावर्णप्रकाशकोषौ दृष्टौ मया। अस्य रचना सरसा, सालङ्कारा, सानुप्रासा च यथा—

शोणस्निग्धांगुलिदलकुलं जातरागं परागैः,
श्रीराधायाः स्तनमुकुलयोः कुङ्कुमक्षोदरूपैः।
भक्तश्रद्धामधुनखमहः पुञ्जकिञ्जल्कजालं,
जङ्घानालं चरणकमलं पातु नः पूतनारेः॥
ब्रह्मानन्दं च भित्वा विलसति शिखरं यस्य यत्रात्तनीडं,
राधाकृष्णाख्यलीलामयखगमिथुनं भिन्नभागेन हीनम्।
यस्यच्छाया भवाध्वश्रमशमनकरी भक्तसंकल्पसिद्धेः,
हेतुश्चैतन्यकल्पद्रुम इव भुवने कश्चन प्रादुरासीत्॥
क्षोणं क्षोणीमृगाक्ष्याः स्थगनमिह रवेः कम्पमाशावधूनां,
स्तम्भं वातस्य कुर्वन्नमरपरिवृढस्याक्ष्णां सहस्रे।
स्वेदं सप्तर्षिगोष्ठ्याः परमरसमयोल्लासमौत्तानपादे--
र्ध्यानध्वंसं विरिञ्चेः स जयति भगवत्कीर्तनानन्दनादः॥

आनन्दवृन्दावनचम्पोरन्तिमश्लोकटीकयाऽवगम्यते यदसौ वङ्गीयोऽपि वृन्दावन एव राधासरस्तीरे जीवनं निनाय।

राधासरस्तीरकुटीरवर्तिनः प्राप्तव्यवृन्दावनचक्रवर्तिनः ।

अद्याप्यस्य वंशजा नदियामण्डलस्य कचड़ापाड़ाग्रामे विद्यन्ते ।

## कुन्तकः

अस्य वक्रोक्तिजीवितं नाम ग्रन्थः प्राप्यते । अयं वक्रोक्तिजीवितकारनाम्नापि प्रख्यातः। अयं ख्रिस्तस्य १५ शताब्द्यां काश्मीरे बभूव । अस्य रचनैदृशी—

संरम्भः करिकीटमेघशकलोद्देशेन सिंहस्य यः,
सर्वस्यैव स जातिमात्रनियतो हेवाकलेशः किल ।
इत्याशाद्विरदक्षयाम्बुदघटाबन्धेऽप्यसंरब्धवान्
योऽसौ कुत्र चमत्कृतेरतिशयं यात्वम्बिकाकेशरी ॥
काव्यकाञ्चनकषाभिमानिना कुन्तकेन निजवाव्यलक्ष्मणि ।
यस्य सर्वनिरवद्यतोदिता श्लोक एष स निदर्शितो मया ॥

## अखण्डानन्दः

अस्य गुरुः अखण्डानुभूतिः । अनेन पञ्चपादिकाविवरणोपरि "तत्वदीपक" नामा ग्रन्थोऽलेखि । अस्य विचारा अप्पय्यदीक्षितेन सिद्धान्तलेशे सग्रहीताः । पञ्चपादिकाविवरणोपरि भावप्रकाशिकाया लेखकेन १५४१ ईसाब्दे वर्तमानेन नृसिंहाश्रमेण स्वकृतावस्योल्लेखः क्रियतेऽतोऽयं १५ शताब्द्यामासीदभवितुमर्हति ।

## जिनमण्डनः

अस्य स्थितिरासीत् १४९२ विक्रमाब्दे । अयं सोमसुन्दरसूरेः शिष्यः । अनेन कुमारपालप्रबन्धो लिखितः।

## दिवाकरः

पं० सुधाकरद्विवेदिनाऽस्य समयो निर्धारितः खिस्तस्य पञ्चदशशताब्द्याम् । अयं गोदावरीतटवर्त्तिनो गोलग्रामस्य वासी। अनेन जातकपद्धतिनामा ग्रन्थो विरचितः।

## वरदनायकसूरिः

अयं खिस्तस्य पञ्चदशशताब्द्यां बभूव । अनेन स्वकीये "चिदचिदीश्वरतत्त्वनिर्णये" वादगुरोस्तत्त्वत्रयचुलुकसंग्रहस्योल्लेखः कृतः।

## कुम्भः

अयं मेवाड़स्य महाराणाः । अस्य पिता मुकुलो दुर्जनैर्घातितः । अथ १४१६ ईसाब्दे कुम्भो महाराणापदमाप । मालवस्य महमूदो गुर्जरनरेशेन सहास्योपर्याक्रमणं कृतवान् किंतु कुम्भेन पराजितो बन्धीकृतः । दिल्लीपादशाहो यदा मेवाड़माक्रान्तवांस्तदा महमूदः कुम्भस्य युद्धे सहायकोऽभूत् । अनेन जयदेवकवेर्गीतगोविन्दस्य टीका लिखिता । अस्यैव पत्नी मीराबाई । चित्तौड़े कुम्भस्याधुनापि स्तम्भो वर्तते तत्कीर्तिकथाकलितः । अयमुडानामकेन स्वपुत्रेण घातितः ।

## जयतीर्थाचार्यः

अयं पद्मनाभानन्तरं चतुर्थो मठाध्यक्षो बभूव। अयमीसो पञ्चदशशताब्द्यां बभूव। अस्य ग्रन्था इमे—तत्वप्रकाशिका, तत्वोद्योतटीका, तत्वसंख्यानटीका, तत्वविवेकटीका, न्यायकल्पलता, सम्बन्धदीपिका, प्रपञ्चमिथ्यात्वानुमानटीका, न्यायदीपिका, मायावादखण्डनटीका विष्णुतत्वविनिर्णयटीका उपाधिखण्डनटीका, ईशावास्य-प्रश्नोपनिषट्टीका, प्रमाणपद्धतिः, न्यायसुधा, वादावली चेति।

## अनन्ताचार्यः

अनन्तार्याऽपरनामायं ख्रिस्तस्य पञ्चदशशताब्द्यां बभूव। यादवगिरिनिवास्ययं मेलकोटे वसति स्म। अनेन स्वकीये ब्रह्मलक्षणनिरूपणनामके ग्रन्थे सुदर्शनाचार्यकृतश्रुतप्रकाशिकायाश्चर्चा कृता। अस्य ग्रन्था--ज्ञानयाथार्थ्यवाद, प्रतिज्ञावादार्थ, ब्रह्मपदशक्तिवाद, ब्रह्मलक्षणनिरूपण, विषयतावाद, मोक्षकारणतावाद, शरीरवाद, शास्त्रारम्भसमर्थन, शास्त्रैक्यवाद, संविदेकत्वानुमाननिरासवादार्थ, समासवाद, समानाधिकरण्यवाद, सिद्धान्तसिद्धाञ्जनाभिधाः सन्ति। अयं सर्वेषां ग्रन्थानामन्ते लिखदि—

शेषाय वंशरत्नेन, यादवाद्रिनिवासिना।
अनन्तार्येण रचितो वादार्थोऽयं विजृम्भताम्॥

## रघुनन्दनभट्टाचार्यः

अयं ख्रिस्तस्य १५ शतके वङ्गस्य नवद्वीपे जातः। मुसल्मानैः सह हिन्दूनामाचारविचारभ्रष्टताया दूरीकरणाय २५

वर्षावधि सुदीर्घं परिश्रमं कृत्वाऽष्टाविंशतितत्त्वनामकं स्मृति-ग्रन्थं रचितवान् । श्रूयतेऽयमेकदैव गयायां पिण्डदानाय गृहा-न्निःसृतः । समस्तं जीवनं जनानां मङ्गलाय स्मृत्यध्ययनाध्या-पननिर्माणेष्वेव यापितवान् ।

## भानुचन्द्रः

अयं खिस्तस्य १६ शतकेऽभूत् । अस्य गुरोः सूरचन्द्रस्य गुरुर्जैनाचार्योऽकबरसम्मानितो हरिविजयसूरिः । भानुचन्द्रेण सिरोहीनगरे जन्म लब्धम् । अनेन प्रेरितोऽकबरः शत्रुञ्जयतीर्थं मुक्तकरं कृतवान् । अयं बाणकविकृतस्य कादम्बरीपूर्वभागस्य टीकां लिलेख । अस्य शिष्यः सिद्धिचन्द्रो, येन बाणपुत्रपुलिन-भट्टकृतकादम्बर्युत्तरभागस्य टीकाऽलेखि अनेनैव वसन्तराज-सच्छाकुनस्य वृत्तिरलेखि । भानुचन्द्रोऽस्मिन् विषये इत्थं वदति—

श्रीमत्तपागच्छसहस्रदीधितिः श्रीहीरसूरिः समभून्महोदयः ।
श्रीसूरचन्द्रः समभूत्तदीयशिष्याग्रणीर्न्यायविदां वरेण्यः ॥
तदीयपादाम्बुजचञ्चरीको................
श्रीवाचकः सम्प्रति भानुचन्द्रः अकब्बरक्ष्मापतिदत्तमानः ॥
श्रीशाहिचेतोऽब्जषडङ्घ्रितुल्यः, श्रीसिद्धिचन्द्रोऽस्ति मदीयशिष्यः ।
कादम्बरीवृत्तिरियं तदीयमनोमुदे तेन मया प्रतन्यते ॥

भानुचन्द्रो वसन्तराजशाकुनस्य भूमिकायां वदति—

जम्बुद्वीपाभिधे द्वीपे क्षेत्रे भारतनामनि ।
राजते रजतस्वर्णचतुर्वर्णविभूषितम् ॥
अर्बुदाद्रिसमीपस्थं सारणेश्वरशोभितम् ।
सिरोहीनगरं तत्र तिलकं नगरीषु यत् ॥

## वैद्यनाथमिश्रः

अयं ख्रिस्तस्य १६ शतक आसीत् । अस्य पितामहः केशवमिश्रः पिता च रत्नमिश्रः । अनेन दर्शपौर्णमासटीका, श्रौतमन्त्रभेदः, एकाध्वर्यवप्रयोगः, ज्योतिष्टोमटीका, पारस्करगृह्य-सूत्रभाष्यञ्च लिखितम् । अयं कुरुदेशनिवासीति दर्शपौर्णमास-पद्धतौ प्रकटीकृतवान्, यथा 'कुरुदेशप्रसूतेन वैद्यनाथेन धीमता' अयं पारस्करगृह्यसूत्रभाष्यान्ते स्वपरिचयमित्थं ददाति—

"इति श्रीयजुराम्नायचरणमिश्रश्रीकेशवसूनुश्रौतस्मार्त-प्रचण्डरश्मिमिश्र—श्रीरत्नेश्वरजातयाज्ञिकभूवृन्दारकवन्दनीय--मिश्रवैद्यनाथप्रकाशिश्रीसंस्थावैद्यनाथे पाकयज्ञप्रकरणं समाप्तम् ।

## अनन्ताचार्यः

गुजराती-साहित्य-परिषदो विवरणपुस्तकस्य १४१ पृष्ठे लिखितमस्ति यदनन्ताचार्यः ख्रिस्तस्य दशमे शतके गुर्जरदेशस्य बड़नगरग्रामेऽभूत् । अस्य पिता लक्ष्मीधरः । बड़नगरेऽधिका औदीच्यब्राह्मणा वसन्त्यधुनाऽप्यतोऽनन्ताचार्योऽप्यौदीच्य-ब्राह्मण एवेति, किन्तु श्रीधरशास्त्रिणः कथनमस्ति यदनन्ताचार्येण माध्यन्दिनसंहिताया उपरि वेदार्थदीपिका, मीमांसाशास्त्रे वेदार्थ-चन्द्रिका तथा पितुर्लक्ष्मीधरस्य भगवन्नामकौमुद्याः प्रकाशनाम्नी टीका चालेखि । यदि श्रीधरशास्त्रिणः कथनं सत्यं तदानन्ताचार्यः ख्रिस्तस्य सप्तदशे शतके भवितुमर्हति न दशमे शतके, परन्तु भगवन्नामकौमुद्याष्टीकाकारोऽनन्तदेवो नानन्ताचार्य इति भ्रान्तः प्रतीयते श्रीधरशास्त्री । वस्तुतो विवरणपुस्तकनिश्चित एव कालोऽनन्ताचार्यस्य सिद्ध्यति तथा भगवन्नामकौमुदी-

कर्तुर्लक्ष्मीधराद्भिन्नोऽनन्ताचार्यपिता लक्ष्मीधरो भवितुमर्हति वेदार्थदीपिका-वेदार्थचन्द्रिकयोः कर्ता ।

## लक्ष्मीधरभट्टः

अयं कन्नौजनरपतेर्गोविन्दचन्द्रदेवस्य महासन्धिवैग्रहिकपदासीनः सचिवः क्रिस्तस्य १२ शतकान्त आसीत् । अस्य पिता हृदयधरभट्टो मदनपालमहीपतेः सचिव आसीत् । लक्ष्मीधरभट्टेनादौ वेदान्तेऽद्वैतमकरन्दनामा ग्रन्थोऽलेखि ततश्च गोविन्दचन्द्रदेवस्याज्ञया द्वादशकाण्डेषु कृत्यकल्पतरुनामा ग्रन्थो व्यरचि । यद्यप्यधुना सम्पूर्णो ग्रन्थो न प्राप्यते तथापि व्यवहारकालमोक्षकाण्डाः प्राप्नुवन्ति । अस्य ग्रन्थस्य कालकाण्डः १५८८ ईसाब्दलिखितो नदियाप्रान्तरयोलाग्रामे दीनानाथभट्टाचार्यस्य गृहे विद्यत इति वारेशास्त्री ।

## लक्ष्मीधरः

अयं भगवन्नामकौमुदीकर्ता । अस्य पिता नृसिंहो, यथोक्त ग्रन्थे "श्रीनृसिंहसूनोर्लक्ष्मीधरस्य कृतौ" इति गुरुश्चानन्तानन्दो यथा कौमुद्यारम्भे—

> यत्पादपद्मनखकान्तितरङ्गजीरय—
> ज्जम्बालजालविधियां न धियामभूमिः ।
> निःसीमसौख्यजलधिर्जयतादनन्तः,
> सोऽस्मद्गुरुर्जगदनुग्रहजागरूकः ॥

अयं भक्तिरसामृतसिन्धुकर्तू रूपगोस्वामिनो नूनं पूर्ववर्ती यतस्तेन स्वकीयोक्तग्रन्थे स्मृतः । रूपगोस्वामी क्रिस्तस्य षोडशे

शतक आसीदतो लक्ष्मीधरः पञ्चदशशतकस्य पूर्वभागे भवितुमर्हति। भक्तिरसामृतसिन्धुतः पूर्वतनेषु ग्रन्थेषु भगवन्नामकौमुद्या वा तत्कर्तुर्न कश्चिदप्युल्लेखः।

लक्ष्मीधरो बङ्गदेशीयः कस्यचिन्मते यतो नामकौमुद्याः पूर्वं प्रचारस्तत्रैवासीत्किन्तु महाराष्ट्रेऽप्यनल्पः प्रचारो दृश्यते। ख्रिस्तस्य सप्तदशे शतकेऽनन्तदेवेन आपदेवपुत्रेणास्याः प्रकाशनाम्नी टीकाऽलेखि, अतः केषाञ्चिद्विचारे भट्टोजिदीक्षितस्य जनकोऽयम्, किन्तु तेषामयं भ्रमो न भट्टोजिदीक्षितो वङ्गीयो न महाराष्ट्रियः स तु काशीवासी कान्यकुब्जो ब्राह्मणो यतस्तत्पुत्रस्य वीरेश्वरदीक्षितस्य वंशजा अधुनापि कान्यकुब्जब्राह्मणेपूच्चकुलीनाः प्राप्यन्ते दीक्षितावटङ्का वीरेश्वरनाम्ना समेताः। लक्ष्मीधरस्य रचनेयम्—

> अंहः संहरदखिलं सकृदुदयादेव सकललोकस्य।
> तरणिरिव तिमिरजलधिं जयति जगन्मङ्गलं हरेर्नाम॥
> यस्य नामान्यधीयानैः शुकैरपि शुकायितम्॥
> विनेयवल्लवस्त्रीणां स कृष्णः कुरुतात् कृपाम्।
> आकृष्टिः कृतचेतसां सुमहतामुच्चाटनं चांहसा—
> माचाण्डालममूकलोकसुलभो वश्यश्च मोक्षश्रियः।
> नो दीक्षां न च दक्षिणां न च पुरश्चर्यां मनागीक्षते,
> मन्त्रोऽयं रसनास्पृगेव फलति श्रीरामनामात्मकः॥

## शत्रुघ्नः

अयं कांगड़ाप्रान्तान्तर्वर्तित्रिगर्तराज्याधिपतेर्धर्मचन्द्रस्य सभापण्डित आसीत्। शत्रुघ्ननोच्यते—

"आदेशादथ राज्ञस्तस्य श्रीधर्मचन्द्रस्य,,

धर्मचन्द्रस्य समयः १५२० ख्रिस्ताब्दादारभ्य १५५० पर्य-न्तं वर्तते। अयमेव कालः शत्रुघ्नस्यापि। अनेन माध्यन्दिन संहिताया उपरि मन्त्रार्थदीपिकाऽलेखि। अयं दीपिकालेखनकाले मन्त्रव्याख्यानमुवटस्य, छान्दोग्योपनिषद्भाष्यं गुणविष्णोस्तथा ब्राह्मणसर्वस्वं हलायुधस्य वेदविलासभाष्यं गौरधरस्य च सम्य-गधीतवानिति तद्भाष्यगतेनानेन श्लोकेन प्रतीयते, यथा—

उवटे मन्त्रव्याख्या गुणविष्णौ ब्राह्मणीयसर्वस्वे।
वेदविलासिन्यामपि कौशलमीदृत तथापि मे सद्भिः॥

## मित्रमिश्रः

अयमोड़छानृपतेर्वीरसिंहदेवस्यासीन्मन्त्री। वीरसिंहदेवो-ऽकबरसमय आसीदतः खिस्तस्य १६ शतके मित्रमिश्रो भवितु-मर्हति। अस्य प्रधानं स्थानं ग्वालियरराज्यान्तर्वर्तिनि गोपाला-चल आसीत्। अयं हंसमिश्रस्य पौत्रः परशुराममिश्रस्य पुत्रः। मित्रमिश्रस्यानन्दचम्पूनामकं ग्रन्थं दृष्ट्वा वक्तुं शक्यते यदयं सनाढ्यब्राह्मण आसीत्, यथा "सानाढ्यः स गुणाढ्य एव विदधे श्रीमित्रमिश्रः कृती" इति। अयं वीरसिंहदेवेनाज्ञप्तो याज्ञवल्क्यस्मृतौ वीरमित्रोदयनाम्नीं टीकां लिलेख। अत्राय-मित्थं वदति—

वित्तं मत्वाऽन्यसारं वितरदविरतं, याज्ञवल्क्योक्ति-मुक्ता—
हारं स्मृत्यर्थसारं रचयितुमथ स प्रादिशन्मित्रमिश्रम्॥

## सदानन्दः

अयं मित्रमिश्रकालिकः। अयमपि ख्रिस्तस्य १६ शतक एवाभूत्। अयं तिरहुतप्रदेशीयो मैथिलब्राह्मणः। मित्रमिश्रः

सदानन्दस्य सहायतां सम्प्राप्य याज्ञवल्क्यस्मृतेष्टीकां चकारेति निम्नलिखितेन श्लोकेन ज्ञायते—

उत्तांसस्ती भुक्तेरखिलबुधगुरुः, श्रीसदानन्दधीमान् ।
श्रीभाजो मित्रमिश्राज्जगदुपकृतये, विश्वदादेशदीपम् ॥
दैन्यानां दैन्यदोषापहमकलित च, याज्ञवल्क्योक्तिकोषात् ।
दृष्ट्वा स्मृत्यर्थसारं समचिनुत, यशोधर्मलक्ष्मीविहारम् ॥

## विश्वेश्वरभट्टः ।

अस्य पिता कौशिकवंशभूषणं पेदिभट्टः । विश्वेश्वरभट्टस्य गुरुर्मुनिप्रवरो व्यासारण्यश्च, माता चाम्बिका । अनेन विज्ञानेश्वरकृतमिताक्षराया व्यवहाराध्यायस्य सुबोधिनी टीकाऽलेखि पेदिभट्टस्य नामान्तरमप्पभट्टोऽप्यासीदिति भट्टविश्वेश्वरकथनादेव प्रतीयते । व्यासारण्यस्य समयः खिस्तस्य १६ शतकोऽस्याप्ययमेव । अयं स्वपरिचयमित्थं ददाति—

"योऽप्पभट्टात्मजः श्रीमान् भट्टविश्वेश्वरः सुधीः ।
व्याख्यां मिताक्षराख्यायाः कुरुतेऽयं सुबोधिनीम् ॥"

"इति श्रीमहापण्डितसूरिश्रीपेदिभट्टात्मज भट्टविश्वेश्वरविरचितायां मिताक्षराव्याख्यायां सुबोधिन्याख्यायां व्यवहारालोको नाम द्वितीयोऽध्यायः समाप्तः" ।

## गङ्गाद्विवेदः

अयं खिस्तस्य षोडशे शतक आसीत । अस्य पिता मुहूर्तमार्तण्डलेखको नारायणः । गङ्गाद्विवेदेन वृहदारण्यकोपनिषदः मुख्यार्थप्रकाशिका टीकाऽलेखि । इयं वालिननगरे प्रकाशिताऽस्ति । अथ टीकान्ते लिखति—

"इति श्री विद्वज्जनतिलकद्विवेदश्रीनारायणसूनुना द्विवेदगङ्गेन विरचिता माध्यन्दिनारण्यकव्याख्या मुख्यार्थप्रकाशिका सम्पूर्णा"।

## रावणभट्टः

अयं माध्यन्दिनसंहिताभाष्यकारो लङ्कापतिरावणाद् वेदभाष्यकाराद् भिन्नः। अस्योल्लेखः श्रीक्षेत्रनासिकनिवासिना पद्मनाभदीक्षितेन रुद्रप्रयोगदर्पणेऽकारि। अयं विक्रमस्य षोडशशतक आसीत्। परमार्थप्रपानामके गीताभाष्येऽस्य विषये सूर्यपण्डित इत्थं वदति—

"रावणभाष्ये तु अध्यात्मरीत्याऽऽभ्यन्तरसंग्रामविषयो दर्शितः, उवटभाष्ये तूभयमपि"।

## रूपगोस्वामी

अयं चैतन्यसम्प्रदायभुक्तः खिस्तस्य १६ शताब्द्यामासीत्। पुराऽनेन कस्यचिन्मुसल्मानशासकस्य सेवा कृता। अस्य ग्रन्था इमे—

१ विदग्धमाधवः, २ ललितमाधवः ३ उज्ज्वलनीलमणिः, ४ दानकेलिकौमुदी, ५ बन्धुस्तवावली, ६ अष्टादशलीलाकाण्डः, ७ पद्मावली, ८ गोविन्दविरुदावली, ९ मथुरामाहात्म्यम्, १० नाटकलक्षणम्, ११ लघुभागवतम्, १२ भक्तिरसामृतसिन्धुः, १३ व्रजविलासवर्णनम्, १४ कड्चा इति।

## विद्याद्विवेदः

अयं गुर्जरस्याणन्दपुरे १५५० विक्रमाब्द आसीत्। अस्य नीतिमञ्जरीनामा ग्रन्थः प्राप्यते।

अस्य रचनादर्शः—

पौरुषे कारणं वीर्यं योनिरेव न कारणम् ।
अश्विभ्यां नासिकाजाभ्यां गौर्हि दोग्ध्रीकृताशयः ॥

## जगन्नाथः

यद्यपि तैलङ्गस्य मुगेंडाग्रामे पेरुभट्टसुतो लक्ष्मीगर्भजो भामिनीपतिश्चायं पण्डितराजो जगन्नाथः श्रूयते तथा पितुर्ज्ञानेन्द्रभिक्षोर्ब्रह्मविद्यां, महेन्द्रपण्डितात् न्यायवैशेषिकदर्शनं, काश्यां खण्डदेवात् पूर्वमीमांसामधीतवानिति. किन्त्ववधप्रान्ते किंवदन्तीयमस्ति यदयं चोलराजसभां, जयपुरनरेशं, दिल्लीपतिशाहजहाँबादशाहं समाश्रित्य नेपालान्तर्गतबांसीराज्यमाश्रितवान्। इति जनाश्रुतिरेका पण्डितराजस्य समयेऽयोध्याया उत्तरवर्तिलकड़मण्डीपर्यन्तं नेपालराज्यमासीत्। बांसीराज एव नेपालभूपोऽस्मिन् श्लोके स्मृतोऽनेन—

दिल्लीश्वरो वा जगदीश्वरो वा मनोरथान् पूरयितुं समर्थः ।
नेपालभूपैः परिदीयमानं शाकाय वा स्याल्लवणाय वा स्यात् ॥

अयं परमाभिमानी, अप्पय्यदीक्षितस्य चित्रमीमांसायाः खण्डनं कृतवान् महाविदुषः दक्षिणदेशीयतीर्थानि विसृज्योत्तरभारतीयमथुराकाश्यादिवासोऽस्य कान्यकुब्जब्राह्मणत्वं द्योतयति । अस्य, पितुः, मातुः स्त्रियाश्च नामान्यपि कान्यकुब्जे भवन्ति । प्यारे वा पियारे शब्द एव पेरुर्बभूव । भट्टशब्दः पाण्डित्यख्यापकः । अभिमानिनः कान्यकुब्जाः प्रसिद्धा एव । दक्षिणदेशवासित्वे तैलङ्गब्राह्मणत्वे नास्य तथा प्रमाणान्यधिगच्छन्ति यथोत्तरवासित्वे कान्यकुब्जब्राह्मणत्वे च । चोलराजसमाश्रयणं तथैवास्य मन्तव्यं यथा प्राणभरणोक्तकामरूपराज्यसमाश्रयणं जयपुरदिल्लीनेपालराज्यसमाश्रयणवत्।

फारसीभाषाया अयं विद्वान् शाहजहाँबादशाहतो लब्धपण्डितराजोपाधिः कयाचिल्लवङ्गीनाम्न्या यवन्या सह विवाहसम्बन्धश्चकार । नैषा किम्बदन्ती प्रामाण्यमर्हति तद्ग्रन्थेषु कुत्रचिदपि तदनुपलब्धेः ।

न याचे गजालिं न वा वाजिराजिं न वित्तेषु चित्तं मदीयं कदाचित् ।
इयं सुस्तनी मस्तकन्यस्तकुम्भा, लवङ्गी कुरङ्गीदृगङ्गीकरोतु ॥
यवनी नवनीतकोमलाङ्गी, शयनीये यदि लभ्यते कदाचित् ।
अवनीतलमेव साधु मन्ये, न वनी माघवनी विलासहेतुः ॥

इत्यादयः श्लोकाः केनचिदन्येन रचिता जगन्नाथे संलग्ना अप्रमाणिका एव मन्तव्याः । पण्डितराजस्य ग्रन्थेषु न प्राप्यन्ते । अयं स्वकवितायाः परमाभिमानी स्वं सर्वतोऽधिकं भाग्यशालिनञ्च मन्ता, कटुवाक् यथा—

दधि मधुरं, मधु मधुरं, द्राक्षा मधुरा, सिताऽपि मधुरैव ।
यस्य तु तदपि मधुरं यस्य मनो यत्र संलग्नम् ॥

वन्द्यैव माधुरीयं पण्डितराजस्य कवितायाः ॥
आमूलाद्रत्नसानोर्मलयवलयितादा च कूलात् पयोधेः
यावन्तः सन्ति काव्यप्रणयनपटवस्ते विशङ्कं वदन्तु ।
मृद्वीकामध्यनिर्यन्मसृणरसझरीमाधुरीभाग्यभाजां,
वाचामाचार्यतायाः पदमनुभवितुं कोऽस्ति धन्यो मदन्यः ॥
शास्त्राण्याकलितानि नित्यविधयः सर्वेऽपि सम्भाविता
दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः ।
सम्प्रत्युज्झति मानसं मधुपुरीमध्ये हरिः सेव्यते
सर्वं पण्डितराजराजितिलकेनाकारि लोकाधिकम् ॥
दुर्वृत्ता जारजन्मानो हरिष्यन्तीति शङ्कया ।
मदीयपद्यरत्नानां मञ्जूषैषा मया कृता ॥

अयं पण्डितराजराजितिलकः १५८१ शकाब्दे भारत-भुवमलङ्कृतेनिस्म। अस्य ग्रन्थेष्विमे प्रसिद्धाः—

१ अमृतलहरी, २ आसफविलासः ३ करुणालहरी, ४ चित्रमीमांसाखण्डनम् ५ जगदाभरणकाव्यम्, ६ पीयूषलहरी, ७ प्राणाभरणकाव्यम् ८ भामिनीविलासः ९ मनोरमाकुचमर्दनम्, १० यमुनावर्णनचम्पूः ११ लक्ष्मीलहरी, १२ सुधालहरी, १३ रसगङ्गाधरश्चेति।

अस्य रचनेदृशी—

स्थितिं नो रे दध्याः क्षणमपि मदान्धेक्षणसखे!
गजश्रेणीनाथस्त्वमिह जटिलायां वनभुवि।
असौ कुम्भिभ्रान्त्या खरनखरविद्रावितमहा—
गुरुग्रावग्रामः स्वपिति गिरिगर्भे हरिपतिः॥

पुरा सरसि मानसे विकचसारसालि-
स्खलत्परागसुरभीकृते पयसि यस्य यातं वयः।
स पल्वलजलेऽधुना मिलदनेकभेकाकुले,
मरालकुलनायकः कथय रे! कथं वर्तताम्॥

तावत्कोकिल! विरसान् यापय दिवसान् वनान्तरे निवसन्
यावन्मिलदलिमालः कोऽपि रसालः समुल्लसति॥

मृद्वीका रसिता सिता समशिता स्फीतं निपीतं पयः,
स्वर्यातेन सुधाऽप्यधायि भवता रम्भाधरः खण्डितः।
सत्यं ब्रूहि मदीयजीव! भवता भूयो भवे भ्राम्यता,
कृष्णे यत्तदरयोरयं मधुरिमोद्गारः क्वचिल्लक्षितः॥

प्रभाते स्नातीनां नृपतिरमणीनां कुचतटी-
गतो यावन्मां मिलति तव तोयैर्मृगमदः।

मृगास्तावद्वैमानिकसुरवहस्तैः परिवृता,
विशन्ति स्वच्छन्दं विमलवपुषो नन्दनवनम् ॥

## रामचन्द्रः

अयमुन्नतदुर्गनिवासिनो बोवनस्य पुत्रः। अस्य ज्येष्ठो भ्राता राघवः। अनेन पद्मनाभरचितस्य नालिकायन्त्राध्यायस्य रत्नावली टीका लिखिता। अयं १५०५ शकाब्द आसीत्। रत्नावल्यामयं वदति—

शाकेऽद्वाभ्राभ्याचन्द्राब्दे शीकरीनगरे कृता।
शासत्यकबरे राजन्युर्व्यां राज्यं सुधार्मिकम् ॥

अस्य रचना—

वृत्तानि रत्नानि सुवर्णयुक्तान्यादाय बद्धा शिशुबोधनार्थम्।
रत्नावलिः कण्ठगता च येषां रत्नावलिर्हस्तगताऽस्तु तेषाम् ॥

## विश्रामः

अयं गुर्जरस्य जम्बूसरनिवासी कौण्डिन्यगोत्रः। अस्य पिता पुरुषोत्तमः पितामहो जनार्दनस्तथा प्रपितामहो दैवज्ञोऽनन्तः। अनेन जातकपद्धतिस्तथा यन्त्रशिरोमणिनामा ग्रन्थोऽलेखि। अयं द्वयोग्रन्थयोरन्ते स्वसमयमित्थं वदति—

शाके नन्दद्विपञ्चेन्दु १५२९ प्रमिते च नभस्यके।
वृत्तैः सप्ताब्धितुल्यैश्च कृता जातकपद्धतिः ॥
शाके सप्तत्रिपञ्चेन्दु १५३७ प्रमिते रचितो मया।
ग्रन्थो यन्त्रागमानां हि वृत्तैर्नन्देन्दुदस्रकैः ॥

अस्य वचनेदृशी—

यत्रेन्द्रेण हि पर्वतादिशिखरं विध्वा स्वपादाङ्कतो—
ऽग्रे गत्वा च पुनस्तदन्तरगता भूर्भास्करैश्चाहता ।
भक्त्या चोन्नतभ्रंशेण हि तदोच्चं स्वात्मभानान्वितं,
ज्ञेयं सद्गुरुसम्प्रदायवशतो नोक्तं मया यत्तु वै ॥

## सदाशिवेन्द्रः

ब्रह्मेन्द्रापरनामा सदाशिवेन्द्रसरस्वती ख्रिस्तस्य १६ शताब्द्यां दक्षिणभारते जातः । अस्य गुरुरद्वैतानन्दः कामकोटिपीठाध्यक्षो गुरुरत्नमालिकाग्रन्थे कथितः । अस्येमे ग्रन्था: सन्ति—१ वेदान्तदर्शनवृत्तिः, २ योगदर्शनवृत्तिः, ३ अद्वैतविद्याविलासः, ४ आचार्यात्मानिर्वेदः, ५ गुरुरत्नमालिका, ६ ब्रह्मकीर्तनतरङ्गिणी च । अयमप्पय्यदीक्षितसमकालिकः । अस्य रचनादृशी—

तृणतुलिताऽखिलजगतां, करतलकलिताऽखिलार्थतत्त्वानाम् ।
श्लाघा धीरयघूटी घटदासत्वं सुदुर्नरसम् ॥

## गागाभट्टः

अयं काशीवासी ब्राह्मणः १५६६ शकाब्द आसीत् अयं तीर्थयात्रां प्रकुर्वन् गोदावर्यास्तटवर्तिनि पैठणग्रामे पन्तैन प्रार्थितः शिवाजीमहाराजस्य राज्याभिषेकाय रामगढं नीतः । तत्राय शिवाजीमहाराजस्य क्षत्रियत्वं प्रतिपाद्य तं व्रात्यं मत्वा प्रायश्चित्तं तस्य कारयित्वा यज्ञोपवीतं तस्मै दत्वा च १५९६ शकाब्दीयज्येष्ठशुक्लत्रयोदश्यां गुरौ तद्राज्याभिषेकं चकार ।

निश्चलपुरीयो ववंगोविन्दभट्टः प्रसिद्धनन्दी कोङ्कणोऽनेन सह शास्त्रार्थं कृतवान् । अस्य चन्द्रालोकस्य टीका राकागमताख्नी प्राप्यते ।

## अकबरः

अस्य प्रधानं नाम अबुलमुजफ्फर जलाल उद्दीन मुहम्मद्-अकबरबादशाहोऽस्ति। अस्य पिता हुमायूं—नाम्ना ख्यातः। अयं १५४२ ईसाब्देऽमरकोटे जातः। अस्य सभायामनेकधर्माचार्य पण्डितगुणिन आसन्। अस्य समयेऽनेके संस्कृतग्रन्था ज्ञिखिनाऽन्तथा फारस्यामनूदिता अत एवास्य संस्कृतज्ञता प्रकटाभवति। मम पितृपादा अकबरस्य कांश्चित् श्लोकान् पठन्ति स्म तेष्वयमेकोऽस्ति—

वसुखशरनिशेशे तीर्थराजप्रयागे तपसि बहुलपक्षे द्वादशीपूर्वयामे।
शिखिनि तनुरहौषीत् सार्वभौमाधिपस्यै सकलदुरितहारी ब्रह्मचारी मुकुन्दः॥

## रहीमः

अयमब्दुल्लरहीमखानखाना नाम्ना प्रख्यातो १४५६ ईसाब्दे लाहौरे बभूव। अस्य पिता बैरमखांखानखाना आसीत्। अयमकबरस्य सभ्यः। अनेन सलीमाय शिक्षा दत्ता। अकबरोऽस्य योग्यतया तुष्टो मिर्जाखानखानोपाधिं दत्तवान्। अयं संस्कृतस्य कविरासीज्ज्योतिर्विद्याकबरस्य नवरत्नप्रख्यातः। अस्य खेटकौतुकनामा ग्रन्थः संस्कृत, फारसी, हिन्दीमिश्रितः प्राप्यते, मदनाष्टकनामापि च।

अस्य रचनेदृशी—

अच्युतचरणतरङ्गिणि, शशिशेखरमौलिमालतीमाले।
त्वयि तनुवितरणसमये, हरता देया न हरिता॥
आनीता नटवन्मया तव पुरः श्रीकृष्ण! या भूमिका,
व्योमाकाशखखाम्बराब्धिवसवस्त्वत्प्रीतयेऽद्यावधि।

प्रीतिस्तस्य निरीक्षणे हि भगवन्! मत्प्रार्थितं देहि मे,
नो चेद् ब्रूहि कदाऽपि मा नय पुनर्मामीदृशीं भूमिकाम् ॥

खेटकौतुकावलोकनेन प्रतीयते यत्तदानीं संस्कृतफारसी-मिश्रितपुस्तकलेखनप्रणाली बहुमता चलिता चासीत्, यथा—

फारसीयपदमिश्रितग्रन्थः, परिहृतं बहुकृतः खलु सभ्यैः।
प्रकृत्य तदृदपथं करवाणि, खेटकौतुकमहं बनसुखः ॥

अस्य मिश्रिता रचनेदृशी—

दर्शको अल्दारः पितृगुरुभक्तश्च कादिलो मनुजः।
जोहरा शाहसकाने भवति खुशीरश्च साहचो वा स्यात् ॥

यदा मुश्तरीवकुटे वा कमाने यदा चश्मखोरा जमी वाऽऽसमाने।
तदा ज्योतिषी क्या लिखेगा पढेगा हुआ बालका बादशाही करेगा ॥

दृष्टुं तत्र किंचिद्रतां तरुतले मैं था गया बाग में,
काचित्तत्र कुरङ्गशावनयना गुलतोड़ती थी खड़ी।
उन्नद्भ्रूधनुषः कटाक्षविशिखैर्घायल् किया था मुझे,
तत् सीदामि सदैव मोहजलधौ हे दिल गुजारो शुकर ॥

## मौलाशी

अयमकबरस्य सभ्यः। बदायूनिना यदा महाभारतानुवादेऽश्रद्धा प्रकटीकृता तदाऽकबराज्ञयाऽयं नकीबखांसहचरो भूत्वा महाभारतस्यानुवादं चकार।

## बदायूनिः

अयं प्रसिद्धोऽकबरस्य नवरत्नेषु परिगणितः खिस्तस्य षोडश्यां शताब्द्यामासीत्। अनेन संस्कृतभाषाध्ययनमुचितं कृतमासीत्। अनेनाधुना सिंहासनबत्तीसी-नाम्ना ख्यातस्य संस्कृत-

भाषामयद्वात्रिंशत्पुत्तलिकाग्रन्थस्यानुवादः फारस्यां "खिरदअफजा" नाम्ना कृतः अतः परमयमकबरस्याज्ञां सम्प्राप्य श्रीमद्वाल्मीकीयरामायणस्यानुवादं कृतवान्। महाभारतानुवादकर्त्रृत्वेऽप्ययं प्रसिद्धः। ग्रयमथर्ववेदानुवादमपि चिकीर्षति स्म किन्तु बह्वायां काठिन्यं मत्वा स्वविचारं तत्याज।

## हाजी इब्राहीमः

अयं हाजी इब्राहीमसिरहिन्दीनाम्ना प्रख्यातः ख्रिस्तस्य १६ शतके बभूव। अस्य संस्कृतभाषायां पूर्णाभ्यासः प्रतीयते।

अथर्ववेदस्यानुवादं फारस्यां कामयमानेनाकबरेण बदायूनिर्नियुक्तीकृत किन्तु तस्य दुरूहां भाषामवलोक्य स स्वकीयामसमर्थतां प्रकटयाञ्चकार। अथास्मिन् कर्मण्ययं सिरहिन्द्येव नियुक्तोऽभूत्। अनेनाथर्ववेदस्यानुवादः फारस्यां कृतः।

## सुलतान हाजी

अयं सुलतानहाजीस्थानेश्वरी नाम्ना प्रसिद्धः खिस्तस्य १६ शताब्द्यामासीत्। अकबरस्य मुसलमाननवाबेष्वस्य प्रसिद्धिः। अनेनादावेकपर्वानुवादो महाभारतस्य कृतः किन्तु फैजी यदाऽनुवादकार्यमपूर्णं त्यक्त्वा परलोकं गतस्तदा तत्स्थानापन्नेनानेन सोऽनुवादः पूर्णतयावलोकितः परिमार्जितश्च। अयमपि फैजीवत् स्वकार्यमपूर्णमेवा त्यक्त्वा परलोकं गतवान्।

## अब्दुलफजः

फैजीनाम्नाख्यातोऽयमकबरस्य सभ्यः १५६० ख्रिस्ताब्द आसीत्। अनेन संस्कृतभाषाध्ययनं सम्यक् कृतमासीत्। अयमबुलफजलस्य लघुभ्राता। अनेन बदायूनि, नर्वादखां, मौला-

स्यादिभिरनूदितं महाभारतं काव्यादिगुणयुक्तं प्रशंसतश्चकार किन्तु तत्पूर्णतापूर्वमेव स परलोकं जगाम । यस्मिन् कालेऽयं मृतस्तदाऽस्य पुस्तकालये श्रूयते ४६०० तोऽधिका हस्तलिखिता: संस्कृतभाषाग्रन्था आसन् । अनेन संस्कृतस्यानेके ग्रन्था अनूदिता: फारस्याम् ।

## मुल्लासाबरी

अयमकबरस्य सभ्य: । अनेन शोभनं संस्कृतभाषाध्ययनं कृतमासीत् । राजनामाकर्तृष्वयमप्येक: । खिस्तस्य षोडश्यां शताब्द्यामासीत् ।

## अबुलफजल:

अयं १५५६ खिस्ताब्दे जात: । मुसल्मानेष्वस्य कुलं प्रतिष्ठितं श्रूयते । अयमकबरस्य सभासत्, सेनापतिर्मन्त्रीतिहासलेखकस्तथा ज्ञानशाताऽऽसीत् कृपापात्रञ्च । अनेन संस्कृतभाषाया: शिक्षाऽपीच्छया गृहीता । फारस्यामनेन संस्कृतभाषाया अनेके ग्रन्था अनूदिता: । बादरायणकृतमहाभारतस्यानुवादो राजनामाऽऽख्योऽनेन कृत: फैजीसहायतां प्राप्य ।

अबुलफजल: संस्कृतज्ञ आसीदत: परमार्थचिन्तायां, काव्ये, तथैतिहासलेखन एव कालं नयतिस्माधिकमतो राजपुरुषोचितकूटनीतेरभाव आसीदत एव सलीमप्रेरितेनाऽयमोड्छानिकटे केनचिन्नृशंसकेन घातित: १६०२ ईसाब्दे ४७ वर्षावस्थायां मृत्युमाप ।

## मुल्लामोहम्मद:

अयमकबरस्य नवरत्नेषु वर्तते । अयं संस्कृतज्ञ आ-

सीत् फारस्यां प्रसिद्धस्य राजानामाख्यस्य महाभारतस्यानुवादकर्तृत्वमस्ति।

## नकीबखां

अयमकबरस्य सभ्यः। अकबरो यदा महाभारतस्य फारस्यामनुवादमियेष तदाऽमुमाहूयानेकरात्रिषु तत्कथां कथितवान्। पुनस्तस्य संक्षेपकरणाज्ञामस्मै दत्तवान्। अस्य सहायतायै बदायूनिस्तेन नियुक्तः। अनेन चतुर्षु मासेषु पर्वद्वयस्यानुवादो विहितः। मुसल्मानधर्मस्य परपक्षपाती बदायूनिः खाद्याखाद्यप्रकरणे पलांड्वादिवर्जितपदार्थानामनुवादं कुर्वन् स्वभाग्यस्य परमां गर्हणां चकार। नकीबखां बदायूनेर्दृष्टिं विपरीतां दृष्ट्वा मालाशिनं स्वसहायतायां नियुक्तश्चकार। अस्यानुवादोऽद्यावधि श्रूयते।

## कविचन्द्रः

अयं रत्नावलीनामकवैद्यकग्रन्थस्य तथा रामचन्द्रचम्पूग्रन्थस्य प्रणेता। अस्य पिता कर्णपूरः, यः परमानन्दाभिधात् कर्णपूराद्भिन्नः १६ षोडशशतके जातः।

## विट्ठलनाथः

अयं वल्लभाचार्यस्य पुत्रो १५७२ विक्रमाब्दे मिर्जापुरस्य चुनारनगरे जातः। श्रूयते संस्कृतभाषायामस्य ४० ग्रन्थाः सन्ति। अयं १६३२ विक्रमाब्दे परलोकं गतवान्।

## नीलकण्ठ

अयं शालिवाहनस्य षोडशशतके बभूव। अस्य पिता "अनन्तदैवज्ञः" गर्गगोत्रोद्भवः। ३० वर्षात्मके वयसि नीलकण्ठीमसौ

प्रणिनाय । मुहूर्तचिन्तामणेः पीयूषधाराटीकायाः प्रणेता गोविन्ददैवज्ञोऽस्यात्मजः। नीलकण्ठोऽकबरबादशाहस्य सभ्य आसीत् अयं स्वविषये वदति—

> सीमा मीमांसकानां कृतसुकृतचयः कर्कशस्तर्कशास्त्रे,
> ज्योतिःशास्त्रे च गर्गः फणिपतिभणितिव्याकृतौ शेषनागः ।
> पृथ्वीशाकब्बरस्य स्फुरदतुलसभामण्डनं पण्डितेन्द्रः,
> साक्षात् श्रीनीलकण्ठः समभवदवनीमण्डले नीलकण्ठः ॥

## रामभट्टः

अस्य पिता, "अनन्तदैवज्ञो" गार्गगोत्रोत्पन्नः । अकबरबादशाहस्य सदस्योऽयमासीत् । अस्येमे ग्रन्थाः—

१ मुहूर्तचिन्तामणिः २ रामविनोदः ३ यन्त्रप्रकाशः ४ सिद्धान्तचन्द्रिका । टोडरानन्दोऽपि टोडरमल्लनाम्नाऽनेन प्रणीत इति किम्वदन्ती प्रसिद्धा । अयं सिद्धान्तचन्द्रिकाया मङ्गलाचरणे-

> "महेशार्न नमस्कृत्य गतं बुध्वा पतञ्जलेः"

तथा मुहूर्तचिन्तामणावपि "भाष्ये कृतातिश्रम" इति पौनःपुन्येन भाष्यनामग्रहणाद् व्याकरणे सद्व्युत्पत्तिमानासीदिति बुध्यते ।

अस्य रचना—

> क्रियाकलापप्रतिपत्तिहेतुं संक्षिप्तसारार्थविलासगर्भम् ।
> अनन्तदैवज्ञसुतः स रामो मुहूर्तचिन्तामणिमातनोति ॥

## कमलाकरभट्टः

अयं स्वकीयाग्रजाद्दिवाकरान्निखिलां ज्योतिर्विद्यां समधीतवान् । अस्य जन्मकालः १५३८ शके । अस्य पिता भास्कर

कृतसिद्धान्तशिरोमणेः वासनाटीकालेखको नृसिंहदैवज्ञ आसीत्। रङ्गनाथोऽस्यानुजः। सिद्धान्तशिरोमणेः मरीचिटीकायाः प्रणेता। मुनीश्वरोऽस्य केनचित् सम्बन्धेन पितृव्य आसीत्। प्रयागे कदाचित्, अनयोर्मुनीश्वरकमलाकरयोः पण्डितानां शास्त्रार्थ-सङ्के विपश्चित्वं जातम्, अत एव कमलाकरेण मुनीश्वरमतखण्डनं स्वकीये तत्त्वविवेकाख्ये ज्योतिःसिद्धान्तग्रन्थे कृतम्। मुनीश्वरस्य भङ्गीग्रन्थस्यापि खण्डनमस्याऽनुजो रङ्गनाथो भङ्गीभङ्गी ग्रन्थं विरचितवान्। भास्करीयबीजगणितस्यानेका अभिनवा उपपत्तयोऽनेन कृताः। निर्णयसिन्धुः अनेनैव विरचितः। यद्यप्यस्य पूर्वजा गोदातटे गोलग्रामस्य निवासिन आसन् तथाप्यस्य पिता स्वपुत्रादिभिः सह काश्यामेवाध्युवास, अतोऽयं काशीवासी बभूव।

## गणेशः

अयं जातकालङ्कारस्य प्रणेता ख्रिस्तस्य १६ शतक आसीत्। अस्य पितामहः कान्हजीः तदानीन्तनस्य कस्यचिद् गुर्जरदेशनरेशस्य सभायामासीत् सभ्यः। भारद्वाजगोत्रजो गोपालोऽस्य पिता। अनेन सूर्यपुरापरनामके कृष्णपुरे ग्रन्थ. समाप्तिं नीतोऽत एवानुमीयते यदयं सूरतवासी गुर्जरब्राह्मणः।

अस्य रचनेदृशी—

सानन्दं प्रणिपत्य सिद्धिसदनं लम्बोदरं भारतीं,<br>
सूर्यादिग्रहमण्डलं निजगुरुं भक्त्या हृदब्जे स्थितम्।<br>
येषामङ्घ्रिसरोरुहस्मरणतो नानाविधाः सिद्धयः<br>
सिद्धिं यान्ति लघु क्रियाश्च विदुषां प्रायः ... लब्धजाः ॥

## गणेशदैवज्ञः

अयं विक्रमस्य षोडशशके जातः । पिताऽस्य पश्चिमाब्धितटवर्तिनन्दीग्रामवास्तव्यः केशवः, लक्ष्मी च जननी ज्योतिःशास्त्रस्य प्रखरोऽयं विद्वानासीत् । साक्षाद् गणेशावतारो गणेश इति इति तदानींतनानां विश्वासः । अस्य ग्रन्था इमे—

१ ग्रहलाघवः, २ लघुतिथिचिन्तामणिः, ३ सिद्धान्तशिरोमणिटीका, ४ विवाहवृन्दावनटीका, ५ मुहूर्ततत्त्वटीका, ६ सुधीरञ्जनतर्जनीयन्त्रम्, ७ श्राद्धनिर्णयः, ८ कृष्णाष्टमीनिर्णयः ९ छन्दोऽर्णवटीका, १० लीलावतीटीका, ११ बृहत्तिथिचिन्तामणिः, १२ होलिकानिर्णयः ।

## नृसिंहदैवज्ञः

अयं खिस्तस्य १६ शतकै गोदावरीतटवर्तिनि गोलनामके ग्रामे जातः । अस्य पिता कृष्णदैवज्ञो लघुभ्राता शिवदैवज्ञः, पितृव्याः विष्णु, मल्लार, केशव, विश्वनाथाः, पुत्राश्च दिवाकर, कमलाकर, गोपीनाथ, रङ्गराजाः । नृसिंहेन काश्यां वास कृतस्तत्रैव सूर्य सिद्धान्तादिग्रन्थानां टीकाः कृताः ।

## नृसिंहसरस्वती

अयं वेदान्तसारस्य टीकायाः सुबोधिन्याः कर्ता । यत्रानेन स्वकीयः समयः १५६३ लिखितः । अस्य गुरुः श्रीकृष्णानन्दसरस्वती ।

## परमानन्ददासः

अयं कन्नौजवासी कान्यकुब्जो ब्राह्मणः खिस्तस्य १६ शतक आसीत् । अयं वल्लभाचार्यस्य शिष्यो हिन्द्या अष्टछाप

कविषु प्रसिद्धः । अस्य पद्यसंग्रहो विठ्ठलनाथेन परमानन्दसागर-नाम्ना कृतः । अनेन संस्कृतभाषायां संस्कृतरत्नमाला नाम ग्रन्थो व्यरचि ।

## अनन्तदैवज्ञः

अयं विदर्भप्रदेशान्तर्गतधर्मपुरग्रामवास्तव्यस्य चिन्तामणिदैवज्ञस्य तनुजन्मा, १६ शताब्द्यामासीत् । नीलकण्ठीप्रणेता नीलकण्ठस्तथा मुहूर्तचिन्तामणिकर्ता रामाश्रमोऽस्यैव पुत्रौ । अनेन जातकपद्धतिः प्रणीता, कामधेनुगणितटीका च । अयं सपरिवारः काशीमुपेत्य कृतनिलयोऽवसत् ।

## विठ्ठलः

अयं प्रक्रियाकौमुद्याः प्रसादटीकायाः कर्ता । ग्रन्थकर्तू रामचन्द्राचार्यस्य पौत्रः । टीकेयं खिस्तस्य १६ शतके विरचिताऽतोऽयमेव कालो विठ्ठलस्य ।

## व्यासराजाचार्यः

अस्य न्यायामृतस्य खण्डनं मधुसूदनसरस्वतिनाऽद्वैतसिद्धौ कृतमतोऽयं खिस्तस्य षोडशशताब्द्यामुत्पन्नः । अस्य ग्रन्थत्रयं विद्यते तात्पर्यचन्द्रिका, न्यायामृत, भेदोज्जीवनाभिधम् । अस्य न्यायामृते गुरुर्लक्ष्मीनारायणः कथितः ।

## मल्लनाराध्यः

अयं कौटीशवंशोत्पन्नो दक्षिणभारतस्य निवासी । अनेन अद्वैतरत्नं तथा अभेदरत्नं नाम ग्रन्थद्वयं व्यलेखि । अपरतेऽद्वैतरत्नस्य तत्त्वदीपननाम्ना टीकाऽप्यनेन लिखिता । अयमासीत् षोडश्यां शताब्द्यामुत्पन्नः ।

## केशवः

अयं विक्रमस्य १६ शतके बभूव । अस्य पिता श्रीकमलाकरः पश्चिमसमुद्रतटवर्तिनन्दीग्रामवास्तव्यः । केशवो ज्योतिर्विदो वैद्यनाथादखिलं ज्योतिश्शास्त्रं सम्यगधिजगाम । सुप्रसिद्धः दैवज्ञजनानन्दनः पं० श्रीगणेशोऽस्यैव नन्दनः । केशवस्येमे ग्रन्थाः—

१ ग्रहकौतुकम् २ वर्षग्रहसिद्धिः ३ जातकपद्धतिः ४ कायस्थादिधर्मपद्धतिः ५ गणितदीपिका ६ ताजिकपद्धतिः ७ सिद्धान्तवासनापाठः ८ मुहूर्ततत्त्वम् ९ कुण्डाष्टकधर्मलक्षणम् १० तिथिसिद्धिश्च ।

## शेषकृष्णः

शेषोपनामको नृसिंहसूनुः । श्रीकृष्णकविर्महाराष्ट्रदेशीयः ख्रिस्ताब्दीयषोडशशतकस्योत्तरभागे वाराणस्यामकबरबादशाहराज्यसमय आसीत् अनेन कविना काशीसमीपवर्तिताण्डवपुरनृपाङ्गजन्मनो नरोत्तमस्याभ्यर्थनया पारिजातहरणचम्पूस्तथा दिल्लीवल्लभाकबरस्य मन्त्रिश्रेष्ठटोडरमलस्य राज्ञः पुत्रस्य गोवर्धनधारीत्यपरनाम्नो गिरिधारिणः प्रेरणया कंसवधनाटकं प्रणीतम् ।

तत्रोक्तवानिति—

तस्यास्ति मण्डनकुलामलमण्डनस्य, श्रीटोडरक्षितिपतेस्तनयो नयज्ञः ।
नानाकलाकुलगृहं सविदग्धगोष्ठी-मेकोऽधितिष्ठति गुरुर्गिरिधारिनामा ॥

अस्य रचनेत्थम्—

अमृतं किरति हिमांशुर्विषमेव फणी समुद्गिरति ।
गुणमेव वक्ति साधुर्दोषमसाधुः प्रकाशयति ॥

स्नेहप्रश्रुतपीवरस्तनभरप्राग्भारभूरिक्षरत्—
क्षीरस्नालनपिच्छिलैः प्रतिपदं मार्गैर्निषिद्धत्वरा।
हर्षोत्पुच्छयमानतर्णकरवोत्कर्णा व्रजायोत्सुका,
गोसङ्घा प्रति हुंकृतैरिह मुहुः श्रोत्रोत्सवं कुर्वते॥
अनायका विनश्यन्ति नश्यन्ति बहुनायकाः।
स्त्रीनायका विनश्यन्ति नश्यन्ति शिशुनायकाः॥

## भट्टोजिदीक्षितः

शब्दकौस्तुभोक्तरीत्या भट्टशङ्करः चतुःशास्त्रज्ञवाचित्वेन, तदानीन्तनव्यवहारेण च व्याकरणवेदान्तधर्मशास्त्रपूर्व—मीमांसाशास्त्रज्ञश्चायम्। अयं शाकलार्कशाखाध्यायी कौस्तुभे स्वरवैदिकप्रक्रिययोस्तत्रत्योदाहरणदर्शनात्। अस्य गुरुः प्रक्रियाप्रकाशकारः श्रीकृष्णदीक्षितः, तथाप्पय्यदीक्षितः अनेन मनोरमायां श्रीकृष्णदीक्षितस्य खण्डनमपि कृतम्। एकदाऽनेन पण्डितराजो जगन्नाथो 'म्लेच्छ.' इत्युक्तः। तदा कुपितेन तेन मनोरमाकुचमर्दनं लिखितम्। भट्टोजिदीक्षितः शङ्कर-मतानुयायी मध्वमतखण्डनात्। शुद्धाद्वैतमतमेव प्रकाशयति शब्दकौस्तुभे यथा—

"श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम्"

जीत्यनन्तनाम्ना कथंचिदनुमातुं शक्यते यदयं नर्मदोत्तरदेशवासी तत्रैव तद्व्यवहारदृष्टेः। अस्य पिता लक्ष्मीधरः पुत्रस्त्वेतस्य भानुजिदीक्षितः, येनामरकोषस्य सुधानाम्नी टीका कृता रसमञ्जरी च। अयं पुत्रः शिष्यो वेति केषांचिदूहः। भट्टोजिपुत्रो वीरेश्वरदीक्षित इति रसगङ्गाधरप्रस्तावनायां दृश्य।, अतोऽस्य पुत्रद्वयमिति विनिर्णीत भवति। भट्टोजेर्याः-

१ सिद्धान्तकौमुदी २ मनोरमा, ३ शब्दकौस्तुभः, ४ वैयाकरणभूषणम्, ५ तत्वकौस्तुभः, ६ त्रिस्थलीसेतुः, ७ अशौचनिर्णयः, ८ चतुर्विंशतितत्त्वव्याख्या, ९ प्रवरनिर्णयः, १० दायभागः, ११ तन्त्रसिद्धान्तदीपिका, १२ तिथिनिर्णयः, १३ तैत्तरीयसन्ध्याभाष्यम्, १४ कालनिर्णयः, १५ वेदान्ततत्त्वविवेकटीकाविवरणम्।

अयं शालिवाहनस्य पञ्चदशशताब्द्यां जातः। वीरेश्वरवंश्या दीक्षिताः कान्यकुब्जब्राह्मणेषु प्राप्यन्तेऽतो बहूनां विचारे भट्टोजिदीक्षितोऽप्यासीत् कान्यकुब्जब्राह्मणः। काश्यामस्य वासोऽपि प्रसिद्धः। कान्यकुब्जदेशवासिना पण्डितराजेन सहास्य समीपवर्तित्वाद् विरोधोऽप्यस्य विचारस्य पुष्टिं करोति।

धर्मवीराय पथिकलेखरामः स्वामिविरजानन्दचरिते लिखति यत्स्वामी भट्टोजेर्मूर्तिं प्रतिदिनं छात्रेभ्योऽपमानयति स्मेति। सा मूर्तिः क्व?

## चैतन्यः

अस्य पितुर्नाम जगन्नाथमिश्रो माता च शची देवी। अयं खिस्तस्य १६ शतके नवद्वीपे जातः। श्रूयतेऽस्य विवाहो वल्लभाचार्यस्य कन्यया लक्ष्मीदेव्या सह जात आसीत् किन्तु सा सर्पदष्टा यदा मृता तदा मात्रा प्रेरितः पुनरपि विष्णुप्रियया सह सम्बन्धश्चकार। अयं प्रसिद्धो नैयायिक आसीत्, किन्तु २४ वर्षावस्थायां विरक्तो भूत्वा चैतन्यो बभूव। अस्येमे ग्रन्थाः श्रूयन्ते—१ गोपालचरित्रम् २ तत्वसारः ३ प्रेमामृतम् ४ संक्षेपभागवतामृतम् ५ हरिनामकवचम्। अनेनैको ग्रन्थः श्रूयते न्यायविषयः। अस्य रचनेदृशी—

चेतोदर्पणमार्जनं भवमहादावाग्निनिर्वापनम् ।
श्रेयःकैरवचन्द्रिकावितरणं विद्यावधूजीवनम् ॥
आनन्दाम्बुधिवर्धनं प्रतिपदं पूर्णामृताऽऽस्वादनम् ।
सर्वात्मस्नपनं परं विजयते श्रीकृष्णसंकीर्तनम् ॥
न धनं न जनं न सुन्दरीं कवितां वा जगदीश ! कामये ।
मम जन्मनि जन्मनीश्वरे भवताद् भक्तिरहैतुकी त्वयि ॥

## नीलकण्ठसूरिः

अयमीसोः षोडश्यां शताब्द्यां गोविन्दसूरेः सकाशात् चतुर्धरवंशे गोदावर्याः पश्चिमतटवर्तिनि महाराष्ट्रस्य कूर्परे ग्रामे बभूव अयं महाभारतस्य "भारतभावदीप" नाम्न्या-ष्टीकायाः कर्ता । अनेन गीताभाष्यारम्भे भगवान् शङ्कराचार्य-स्तथा श्रीधरः स्मृतः ।

## सदानन्दयोगीन्द्रः

अयं खिस्तस्य षोडश्याः शताब्द्याः पूर्वभागे जातः । अस्य ग्रन्थद्वयं प्राप्यते—वेदान्तसारः, शङ्करदिग्विजयश्च ।

## श्रीनारायणभट्टपादः

अयं केरलदेशवर्तिनीलानाम्न्या नद्या उत्तरतीरे मे-प्पुत्तूराख्यब्राह्मणकुले जातः । नाऽनेन शैशवे विद्याऽभ्यस्ता किन्तु बाल्ये कालेऽतीतेऽच्युतनामकस्य वैष्णवदासस्य शिष्यो भूत्वा शास्त्राण्यधिजगाम । श्रूयतेऽस्य गुरुः कदाचिद्दीर्घरोगेण पीडितो जातः । तदा नारायणेन तपोबलेन स रोगः स्वस्मिन् संक्रामितः । तदनु गुरुवायुपुरमिति प्रसिद्धक्षेत्रस्थं समीप एव वर्तमानं भगवन्तं नारायणं स्मरन् भागवतार्थमयं नारायणी-

नामकं स्तोत्रं विरच्याथ विगतज्वरो बभूव। स्तोत्रमिदं केरलदेशे सम्मानभाग् वर्तते। ख्रिस्तस्य १५६० मितेऽब्देऽनेन स्तोत्रं कृतमिति तदन्तस्थश्लोकेनानुमीयते। यथा—

> अज्ञात्वा ते महत्त्वं यदिह निगदितं विश्वनाथ ! क्षमेथाः
> स्तोत्रं चैतत्सहस्रोत्तरमधिकतरं त्वत्प्रसादाय भूयात्।
> द्वेधा नारायणीयं श्रुतिषु च जनुषां स्तुत्यतावर्णनेन,
> स्फीतं लीलावतारैरिदमिह कुरुतामायुरारोग्यसौख्यम् ॥

अत्र "आयुरारोग्यसौख्यम्" इत्यस्मात्पदादाय भट्टसिद्धान्तादिज्योतिःशास्त्रप्रसिद्धेन कलञ्चेन कटपयादिक्रमेण ग्रन्थनिर्माणावसरे (१७१२२१०) गतकलिदिवसगणनया उपर्युक्तः ख्रिस्ताब्दो जायते।

अनन्तरमयं तदन्येन केनचिद्राज्ञाऽभ्यर्थितः कमपि ग्रन्थं प्रक्रियासर्वस्वनामकं पाणिनीयव्याकरणव्याख्यानभूतं विरचितवान्। तेनैव राज्ञा प्रेरितो बालचन्द्रनमनोविषयमधिकृत्य "स्वाहासुधाकर" नामकं ग्रन्थं कौतुकेनैव विरचितवान्। अस्य कोटिविरहनामाऽपि ग्रन्थोऽस्ति।

अस्येमा रचनाः

> रविरस्तमस्तं यातः समागतो हन्त हन्त चन्द्रोऽयम्।
> भाति विकाशमपीयं कुमुद्वती किं विलम्बसे भृङ्ग ! ॥
> जिह्वायां कमलोद्भवः स्वगृहिणीं वाणीं दधत्यादरात्।
> कृष्णो वक्षसि सिन्धुराजतनयामाधाय धत्ते मुदम् ॥
> देहार्द्धे गिरिकन्यकां च गिरिशो गृह्णाति मोहाद्यथा।
> स्वाहां हव्यभुगादधाति जठरे कामातुरोऽयं तथा ॥

ब्रह्मादयस्त्रयो देवाः सदा दधति वल्लभाम् ।
दधाति यासमात्रं न पाकः सन्ध्ययोर्द्वयोः ॥
तामेव नूतनां याहि किं मया यातयामया ।
सति सूने दरोत्फुल्ले कस्य वृन्तश्लथे स्पृहा ॥

## श्रीकृष्णः

अयं स्वाहासुधाकरप्रणेतुर्नारायणस्य पुत्रः ताराशशांकस्य प्रणेता अस्यापि कालः ख्रिस्तस्य १६ शताब्दी ।

अस्य रचना—

राधापयोधरतटीपटुचित्रकारपाणिं नखांशुचयकन्दलितामरेणुम् ।
वन्दे कलिन्दतनयाजलकेलिलोलम् गोपालिकावसनचौर्यपरं किशोरम् ॥
क्वचन संगतयोर्विजने तयोः कुतुकिनोरपि च र्अपितात्मनोः ।
हृदयहारि बभूव परस्परं सहसितं क्षणमीलनचलितम् ॥

## दाद्यमहाचार्यः

अयं ख्रिस्तस्य षोडश्यां शताब्द्यामप्पय्यदीक्षितस्य समये शोलिंखरस्थाने बभूव । बाधूलकुलभूषणस्य श्रीनिवासाचार्यस्यायं शिष्यः । अयं गुरोः सकाशात् सम्यगधीत्य महाचार्यपदवीं प्राप्तवान् । अयं वेङ्कटनाथस्य शतदूषणीटीकाकारोऽद्वैतविजय, परिकर, चण्डमारुत, पाराशर्यविजय, ब्रह्मविद्याविजय, ब्रह्मसूत्रभाष्योपन्यास, वेदान्तविजय, सद्विद्याविजयापनिपन्मङ्गलदीपिकाग्रन्थानां रचयिता ।

## अप्पय्यदीक्षितः

अस्य पिता रङ्गराजदीक्षितः । अयमकबरजहाँगीरयोः शासनकाले १५५० ईसाब्दे जातः । अयं १५९० ईसाब्दे

सदाशिवस्य, १५७४ ईसाब्दे चिन्नतिम्मस्य तथा १५८५ ईसाब्दे वेङ्कटपतेर्भूपतेर्विजयनगरशासनं दृष्ट्वा १६२२ ईसाब्दे मृतः । अयं स्वपितुरन्तिक एव विद्यामधिजगाम, तथा नृसिंहाश्रमस्य कथनेन ग्रन्थलेखनं चकार । अयमित्थं स्वपितृविषये तथा स्वविषये वदति—

यं ब्रह्म निश्चितधियः प्रवदन्ति साक्षात्, तद्दर्शनादखिलदर्शनपारभाजम् ।
तं सर्ववेदसमशेषबुधाधिराजं, श्रीरङ्गराजमखिनं गुरुमानतोऽस्मि ।
तन्मूलानिह संग्रहेण कतिचित्सिद्धान्तभेदान् धियः ।
शुद्ध्यै सङ्कलयामि तातचरणव्याख्यावचःख्यापितान् ॥

चिदम्बरमिदं पुरं प्रथितमेव पुण्यस्थलं,
सुताश्च विनयोज्ज्वलाः सुकृतयश्च काश्चित्कृताः ।
वयांसि मम सप्ततेरुपरि नैव भोगे स्पृहा
न किञ्चिदहमर्थये शिवपदं दिदृक्षे परम् ॥

"आभाति हाटकसभानटपादपद्म, ज्योतिर्मयो मनसि मे तरुणारुणोऽयम् ।"
"नूनं जरामरणघोरपिशाचकीर्णा, संसारमोहरजनी विरतिं प्रयाता ॥"

उपरितन पद्यद्वयं पठित्वा यदाऽप्पय्यदीक्षितः शरीरमत्यजत्, तदा तत्पुत्रेण नीलकण्ठदीक्षितेनान्तिम चरणद्वयमपाठि अस्यम ग्रन्थाः—१ आत्मार्पणस्तुतिः, २ उपक्रमपराक्रमः, ३ कुवलयानन्दः, ४ चतुर्मतसारसंग्रहः, ५ चन्द्रकलास्तुतिः, ६ चित्रमीमांसा, ७ दशकुमारचरितसङ्क्षेपः, ८ नामसंग्रहमाला, ९ ब्रह्मतर्कस्तवः, १० भक्तिशतकम्, ११ भारततात्पर्यसंग्रहः, १२ मध्वमतविध्वंसः, १३ रत्नत्रयपरीक्षा, १४ रसिकरञ्जना, १५ रामायणसारस्तवम्, १६ वरदराजशतकम्, १७ वरदनक्षत्रमालिका, १८ विविधरसायनसुखोपजीवनी, १६

वीरशैवः २० सूक्तिवार्तिकम्, २१ वैराग्यशतकम्, २२ शब्द-प्रकाशः, २३ शारीरकन्यायरक्षामणिः, २४ शिवकर्णामृतम्, २५ शिवतत्त्वविवेकः, २६ शिवादित्यमणिदीपिका, २७ शिवाद्वैतनिर्णयः २८ शिवार्चनचन्द्रिका, २९ सिद्धान्तलेश-सङ्ग्रहः, ३० हरिवंशसारचरितम्।

## विज्ञानभिक्षुः

अयं ख्रिस्तस्य षोडश्यां शताब्द्यां कुत्रचिदवधप्रान्ते बभूव। अयमासीत् सन्यासी अयमेव समन्वयवादस्याचार्यः, अनेन गुरोः प्रीत्यै गुरुदक्षिणार्थं ब्रह्मसूत्राणां सांख्यमतानुसारि व्याख्यानमलेखि। यदद्य विज्ञानामृतमुच्यते। अयमासीदीश्वरवादी यतः सांख्यसारे विष्णुं नमस्करोति। अस्य प्रसिद्धग्रन्था ब्रह्मसूत्रविज्ञानामृतम्, उपनिषद्भाष्यम्, गीताभाष्यम्, उपदेशरत्नमाला, सांख्यप्रवचनभाष्यं, सांख्यसारः, योगवार्तिकम्, योगसारश्चेति सन्ति।

## बलभद्रमिश्रः

अयं कात्यायनगोत्रजः कन्नौजवासिनो दामोदरमिश्रस्य पुत्रः। अस्य गुरू रामदैवज्ञः। दिल्लीशस्य शाहजहाँबादशाहस्य पुत्रः वङ्गस्य सुबेदारः शाहशुजा आसीत्। तदन्तिक एव बलभद्रमिश्रो वसति स्म। अनेन १५६४ शकाब्दे 'हायनरत्न' नामको ग्रन्थो विरचितः ताजिकभागे।

## विश्वनाथभट्टाचार्यः

न्यायपञ्चाननो विश्वनाथभट्टाचार्योऽयं गौतमसूत्रवृत्तिकारो वङ्गदेशमलंकृतवान् स्वजन्मना १५५६ शकाब्दे।

न्यायसूत्रवृत्तिश्चान्तिमे पर्वे स्वग्रमुक्तवानिति पण्डितधुरी

स्वराङ्गतिथौ शकेन्द्रकाले, बहुले कामतिथौ शुचौ सिताहे ।
अकरोन्मुनिसूत्रवृत्तिमेतां ननु वृन्दाविपिने स विश्वनाथः ॥

अयमेव कारिकावलीमुक्तावल्योः प्रणेता । सूत्रवृ मुक्तावल्योः का प्रथमेति निर्गदितुं न शक्यते, किन्त्वनुमी यन्मुक्तावली सूत्रवृत्तेः पश्चाद् रचिता यतो भाषापरिच्छेदा पर्यायवाचिकारिकावल्या व्याख्यानकाले लिखितमनेन—

निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरन्तनोक्तिभिः ।
विशदीकरवाणि कौतुकान्नु राजीवदयावशंवदः ॥

आदौ कृता सूत्रवृत्तिस्तां संक्षिप्तामुत न्यायान्तरा पराङ्मुखीमबोधदुर्गमामवलोक्य राजीवनाम्नि पुत्रकल्पे दयां विधाय मुक्तावलीं विशदीचकार । न्यायसूत्रवृत्तौ महा वादं संक्षिप्य मुक्तावल्यां सम्यग् विवेचितवान्, कारिकाव व्याख्यानापदेशेन गुणक्रियादिविषयः प्रशस्तपादाद्यभि ऽपि मीमांसाव्याकरणादिषु प्रथितो यथाऽनेन सनिबद्धस्त ऽल्पप्राचीनन्यायपरिश्रमालोचनेनाऽसुकरः । इत्यादिप्रमाणै स्वीक्रियते यत् सूत्रवृत्तिस्तदीया प्रथमा कृतिः ।

## भावमिश्रः

विल्सनसाहबस्य विचारे विक्रमाब्दस्य १६ शता न्मामयं बभूव । मिश्रलटकस्य काशीप्रान्तस्थस्य कान्यकुब्जे ब्राह्मणस्य श्रीलटकनमिश्रशर्म्मणः शरीरजन्मा । अयं स्वचि त्सया कथं रोगान् विनाशयेदिति भावप्रकाशनाम्ना मह ग्रन्थेनैव सहृदयैरनुमातुं शक्यते । अद्यापि सत्स्वपि ग्रन्थस रोगव्यूहभेदे भावप्रकाश एव भिषग्भिर्धार्यते ।

बोधवीर्ची—वचाविद्रव्याणां वैद्यके फिरंगादिरोगा-
चायमेव प्रतिपादकः ।

यरचना—

आयुर्वेदाब्धिमध्यादतिमतिमुनयो योगरत्नानि यस्मा—
ल्लब्ध्वा स्वे स्वे निबन्धे दधुरखिलजनव्याधिविध्वंसनाय ।
तत्तद्ग्रन्थाद् गृहीतैः सुवचनमणिभिर्भावमिश्रश्चिकित्सा-
शास्त्रे जाड्यान्धकारं प्रशमयितुमिमं संदिधत्ते प्रकाशम् ॥

## वल्लभाचार्यः

अयं मध्यप्रदेशगतरायपुरप्रान्तस्य चम्पारण्यस्थाने
१५ विक्रमाब्दे वैशाखकृष्णैकादश्यां जातः । अस्य पिता
मणभट्टस्तथा माता इलम्मागारुनामध्यासीत् अयं तैलङ्ग-
गो भारद्वाजगोत्रीय आपस्तम्बसूत्री अस्य पूर्वजाः सोम-
जिनो दक्षिणभारतस्य कांकरवाड्ग्रामवासिन आसन् ।
न सम्यगस्य विष्णुस्वामिस्थानापन्नेन १५८७ विक्रमाब्दे
वर्षावस्थायां शरीरं त्यक्तम् । अयमग्न्यवतारः कथ्यते ।
मानमेन श्रीकृष्णभक्तिः प्रचुरं प्रचारमाप । अयं वल्लभस-
ायस्य प्रधानाचार्यः । अस्य ग्रन्था इमे सन्ति—

१ ब्रह्मसूत्राणामणुभाष्यम्, २ श्रीमद्भागवतव्याख्या,
ोधिनी, ३ सिद्धान्तरहस्यम्, ४ भागवतलीलारहस्यम्,
कान्तरहस्यम्, ६ विष्णुपदम्, ७ अन्तःकरणप्रबोधः, ८
चार्यकारिका, ९ आनन्दाधिकरणम्, १० नवरत्नम्, ११
धिलक्षणम्, सविवृतिकम्, १२ सन्यासनिर्णयः ।

## नृसिंहाश्रमः

तत्त्वविवेकग्रन्थावलोकनेन विज्ञायते यदयं नर्मदात-
ीं १५४७ ईसाब्द आसीत् । अस्य गुरुजगन्नाथाश्रमः ।

अयतेऽनेनैव प्रेरितोऽप्यय्यदीक्षितो न्यायरक्षामणि, परिमल, सिद्धान्तलेशादिवेदान्तग्रन्थानां रचनां चकार । अस्य ग्रन्था इमे सन्ति—

१ भावप्रकाशिका, २ तत्त्वविवेकः, ३ भेदधिक्कारः ४ अद्वैतदीपिका, ५ वैदिकसिद्धान्तसंग्रहः ६ तत्त्वबोधिनी।

## नारायणाश्रमः

अयं नृसिंहाश्रमस्य शिष्यः सन्यासी अनेन भेदधिक्कारस्योपरि भेदधिक्कारसत्क्रिया तथा भेदधिक्कारसत्क्रियोपरि भेदधिक्कारसत्क्रियोज्ज्वला नाम्नी टीका लिखिता । अद्वैतदीपिकाया उपर्यप्यस्य टीका विद्यते ।

## रंगराजाध्वरी

अस्य पित्रा वक्षःस्थलाचार्येण बहुविधा यज्ञाः कृता अतो दीक्षितोऽध्वरी वा मखी वेति पदवी लब्धा । अयं विजयनगरनृपतेः कृष्णदेवस्य सभायामासीत् । रङ्गराजाध्वरिणो माता तोतारम्बा । अयम् अद्वैतविद्यामुकुर, विचारदर्पण-प्रभृतीनां ग्रन्थानां रचयिता । अस्यैव पुत्ररत्नं प्रसिद्धोऽप्पय्यदीक्षितः । अयमासीत् काञ्चीवासी ।

## मल्लिनाथः

अयं दक्षिणदेशीयः रासकुमार्याः समीपे कोलाचलस्य वास्तव्यः ख्रिस्तस्य पञ्चदशषोडशशताब्द्योर्मध्य आसीत् । अनेनेमे ग्रन्थाष्टीकाभिर्विभूषिताः ।

१ रघुवंशः, २ कुमारसम्भवः ३ मेघदूतः ४ अमरकोशः ५ किरातार्जुनीयम् ६ शिशुपालवधः ७ नैषध. ८ एकावली ।

इतरेऽपि ग्रन्था एतेन व्याख्याता ये नातिप्रसिद्धतया न लिख्यन्ते ।

## डिण्डिमः

डिण्डिमकवेर्वास्तविकं नाम राजनाथ इति । विजयनगरे ख्रिस्तस्य १६ शतके अच्युतरायनामको योग्यो नरपतिरभूत् । एतस्यैव सभायामासीद् राजनाथडिण्डिमकविः अनेन अच्युतरायस्योपरि अच्युतरायाभ्युदयं नाम १२ सर्गाणां महाकाव्यं निर्मितं, यत्र अच्युतरायस्य राज्यप्रबन्धः, विजयस्तथा अन्येऽप्युपादेया विषया वर्णिताः सन्ति । राजनाथडिण्डिमकविः ख्रिस्तस्य षोडशे शतके आसीत् । अच्युतरायाभ्युदयमहाकाव्यस्य आदिमाः ६ सर्गा वाणीविलासप्रेसे, अन्तिमाः ५ सर्गाश्च अड्यारलाइब्रेरीतः प्रकाशिताः ।

## दुर्यादिवेदः

अयं गुर्जरदेशे ख्रिस्तस्य १५ शतकान्ते अभूत् । अनेन नीतिमञ्जरीनामा कथाग्रन्थः १५५० विक्रमाब्दे लिखितः, प्राप्यते । ख्रिस्तस्य १२ तमे शतके उत्पन्नस्य षड्गुरुशिष्यस्य वेदार्थदीपिकातस्तथा १४ तमे शतके विद्यमानस्य सायणस्य वेदभाष्यात् कानिचिदुद्धरणानि तेन नीतिमञ्जर्यां कृतानि । नीतिमञ्जर्यां वैदिककथा उद्धृताः सुस्पष्टीकरणपूर्वकं साधारणजनोपदेशाय । एतदवलोकनात्प्रतीयते यद् वेदकथाः काचिद्भिन्नाकारा अभूवन् पुराणेषु, रामायणमहाभारतयोः । चित्रमेतद् यद्वेदकथा एव जैनानां, बौद्धानां कथास्वपि रूपान्तरिती-

कृताः। तत्र कारणमनुसन्धेयम्। श्यादिवेद इति विचित्रं नाम विद्याद्विवेद इति कथन्न ?

## रत्नाकरः

अयं दाक्षिणात्यः कविः ख्रिस्तस्य १६ शतके अभूत। एतस्य अद्भुतदर्पणं नाम काव्यं प्राप्यते। अत्र रामकथा, या अङ्गददौत्यादारभ्यते रामाभिषेकान्ते समाप्यते।

## रंगोजिभट्टः

अथ लक्ष्मीधरस्य पुत्रो भट्टोजिदीक्षितस्य ज्येष्ठभ्राता ख्रिस्तस्य १६ शतकेऽभूत्। अयं दर्शनशास्त्रस्य प्रकृष्टो विद्वान्। अनेन वेदान्तदर्शनविवृति तथा सिद्धान्तभङ्गो लिखितः। अस्य पुत्रः कौण्डभट्टो वैयाकरणभूषणस्यान्ते लिखति—

यश्चक्रे मुनिवर्यसूत्रविवृतिं सिद्धान्तभङ्गं तथा।
मध्वानां तमहं गुरुपमगुरुं रङ्गोजिभट्टाभिधम्॥

अनेनाद्वैतमतानुयायिना द्वैताद्वैतमतानुयायिनो वडेरुसंज्ञकस्य साधोर्विजयङ्कृत्वा केलदिवेङ्कटरूपादान्दोलिका कचिदधिगतेति कौण्डभट्टो वदति—

‘विद्याधीशवडेरुसंज्ञकयतिं श्रीमध्वभट्टारकं।
जित्वा केलदिवेङ्कटप्रसन्निधेऽप्यान्दोलिकं प्राप्तवान्,॥

काश्यामयं वसति स्म किन्तु गोदावर्यास्तटेऽपि श्रूयतेऽस्य वासोऽभूत्।

## कुमारस्वामी

अयमनेककाव्यकोषटीकाकर्तुर्मल्लिनाथस्य पुत्रो विक्रमस्य षोडशे शतके समुत्पन्नः। अयं काकटेयराज्याधिपतेः

प्रतापरुद्रस्य प्रशंसायां प्रतापरुद्रीयनामकमलङ्कारग्रन्थं रचितवान्।

## भरतमल्लिः

अयं मल्लिनाथस्य पुत्रः कुमारस्वामिभ्राता विक्रमस्य षोडशे शतके जातः। अनेन भट्टिकाव्यस्य टीका कृता।

## भरतमल्लः

अयं मल्लिनाथतनुजो भरतमल्लेभ्राता विक्रमस्य षोडशे शतके जातः। अनेन दुर्गासप्तशत्याष्टीका कृता।

## श्रीधरस्वामी

अयं रामानुजसम्प्रदायस्य परमानन्दस्य शिष्यः। विक्रमस्य १६ शताब्द्यां समुत्पन्नो दाक्षिणदेशीये ब्राह्मणान्वये। बहुकालेन काशी एव सेविता बभूव। श्रीमद्भागवतस्य टीकां कृत्वा। काशिराजस्य सभायां दर्शितवान्। तुष्टेन तदा काशी-श्वरेणास्मै १०००० दशसहस्रपरिमिता मुद्रा दत्ताः। श्रीधरेण सर्वास्ता विद्वत्सु वितीर्णाः। अस्य ग्रन्थाश्चेमे—

१ श्रीमद्भागवतस्य श्रीधरी टीका, २ भगवद्गीतायाः सुबोधिनी टीका, ३ भगवद्गीतासारटीका, ४ विष्णुपुराणटीका, आत्मप्रकाशनाम्नी, ५ वेदस्तुतिटीका, ६ पुराणानामुपरि, ब्रजविहारभावार्थदीपिका, तथा पदार्थप्रकाशिका टीका।

## रामचन्द्रः

अयं शृङ्गारवैराग्यमयस्य सटीकरसिकरञ्जनकाव्यस्य कर्ता १५२४ ख्रिस्ताब्देऽयोध्यायामासीद्। अस्य पिता लक्ष्मण-भट्टः। अनुश्रूयते कुतश्चिदयं काञ्चिद्रामानाम्नीं विधवां वा

वेश्यासाद्यागत आसीदयोध्यायाम् । रसिकरञ्जनस्य "नित्यानि रञ्जनमिति" श्लोकस्य शृङ्गारपक्षीयटीकायां तेन "सा विधवा" इत्युल्लेख, "मनो मम किरीटिनः कपटमात्रवेश्यालके" इति श्लोके वेश्याशब्दश्च । किरीटिनः शब्दस्य व्याख्यायां तेन रामचन्द्रातिरिक्तं स्वकीयं नामान्तरं मुकुटवर्धन इत्यपि स्वीकृतम् । १७ श्लोकस्य शृङ्गारव्याख्यया परिज्ञायते यद् परित्यक्तायै प्राप्तयौवनायै स्वपत्न्यै विधवाहस्ते समर्पितानि आभरणादीनि द्रव्याणि दातुमिच्छति स्म । ३० तमे श्लोके वर्त्तमानं बुधशब्दमवलोक्यानुमीयते यच्छ्रुतः प्रबन्धशतकर्ता रामचन्द्रबुधेन्द्रोऽयमेव । अयं च स्थितिकालस्थानरसिकरञ्जनग्रन्थविषयेषु वक्ष्यन्ते टीकायाः—

शृङ्गारवैराग्यरसं सपद्य विरत्ययोध्यानगरे व्यधत्त ।
अब्दे वियद्वारणबाणचन्द्रे श्रीरामचन्द्रोऽनु च तस्य टीकाम् ॥

अस्य रचनादर्शो—

अहह सहजमोहाद् देहगेहप्रपञ्चेऽनवरतमतिमग्ना कामिनीविभ्रमाभिः ।
यदहमिह विहर्तुं रंतवानोद्भुग्धः,हर्जहितमहितकृत्यं हन्त ! नान्तःस्मरामि॥

दृष्ट्या सागरलङ्घनं कलयते रासायते लावते ।
लोको यः स न वेद नामपरतः प्राप्नोति कीर्तिं यतः ॥
क्व स्यान्मे पुनरङ्गलक्ष्मीतिरिति ध्यायन्नयं सादरात् ।
कोऽहं कुत्र कुतः कदा कथमिति स्मृत्या परित्यज्यते ॥

न कर्म शताशिकरं कृतं मया न वा चिरं भारतवर्णनं श्रुतम् ।
तथैव पूर्वः समयः समापितो न चेदिदं किं नु कृतं किमु श्रुतम् ॥

## भानुजिदीक्षितः

अयं भट्टोजिदीक्षितस्य पुत्रः स्त्रिस्तस्य १६ शताब्द्यामासीत् । अस्य रसमञ्जरीनामा ग्रन्थः प्राप्यते । अनेनामरको-

षस्य व्याख्यासुधानाम्नी टीकाऽप्यलेखि, या तस्य कदाचित्सन्यासग्रहणानन्तरं जाते रामाश्रमेति नामनि रामाश्रमीनाम्ना प्रख्यातिं गता तन्नाम्नैव निर्णयसागरान्मुद्रिता । अयं तत्र स्वविषये इत्थं लिखति—

वल्लीवल्लभं नत्वा गुरुं भट्टोजिदीक्षितम् ।
अमरं विदधे व्याख्यां मुनित्रयमतानुगाम् ॥

तथैव व्याख्यासुधायास्तृतीयकाण्डान्ते लिखति—'इतिश्रीवघेलवंशोद्भवमहीधरविपर्यासपश्रीकीर्तिसिंहदेवाज्ञया भट्टोजिदीक्षितात्मजश्रीभानुजिदीक्षितविरचितायाममरटीकायां व्याख्यासुधायां तृतीयः काण्डः समाप्तिमगात्' इति ।

अस्य रचनेदृशी—

दासाय भवननाथे वदरीमपनेतुमादिशति ।
हेमन्ते हरिणाक्षी पयसि कुठारं विनिक्षिपति ॥

हस्ते धृताऽपि शयने विनिवेशिताऽपि क्रोडीकृताऽपि यतते वहिरेव गन्तुम् ।
जानीमहे नववधूरथ तस्य वश्या, यः पारदं स्थिरयितुं क्षमते करेण ॥

## रघुनाथदासः

अयं चैतन्यप्रभोः शिष्यः । अत एव खिस्तस्य १६ शताब्द्यामासात् । अस्य पिता गोवर्द्धनदासः । अस्याधिकः समयो वृन्दावन एव व्यतीतः । अस्येमे ग्रन्थाः—

१ श्रीचैतन्यस्तवकल्पवृक्षः, २ उपदेशामृतम्, ३ मनःशिक्षा, ४ विलापकुसुमाञ्जलिः, ५ श्रीप्रेमाम्बुजमकरन्दः ।

## चामुण्डः

अयं कायस्थजातीयो वैद्यवरः रससङ्केतकलिकाया निर्माता । अस्य पुस्तकस्य प्रकाशनं वैद्यप्रवरेण श्रीयादवशम-

था कृतम् । तेन चास्य पुस्तकस्य संकलने पुस्तकत्रयाणां
द्वयमधिगतम्, तत्रैका वैद्यवरमुरलीधरशर्मणोऽस्ति त
न्तेऽस्य कालादिविषये एकश्लोक उपलभ्यते—

"अग्नितिथिमिते वर्षे चामुण्डो योगिनीपुरे ।
रससङ्केतकलिकां कृतवानिष्टसिद्धिदाम् ॥

अग्नितिथिमिते अर्थात् १५३१ मितेऽब्दे इति
ऽब्दाः विक्रमस्याहोस्विच्छालिवाहनस्य वेति स्पष्टं नायाम
किन्तु तदानीं संस्कृतग्रन्थेषु भूरिविक्रमवत्सरस्य दर्शनाद
विक्रमवर्षगणनैका भविष्यति तत्राऽयं खिस्तस्य नूनं
शतकान्ते ग्रन्थमेनं रचितवान् ।

चामुण्डः स्वज्ञातिविषये ग्रन्थादौ वदति ।

शिवं नत्वा रसेशं चामुण्डः कायस्थवंशभूः ।
करोति रससङ्केतकलिकामिष्टसिद्धिदाम् ॥

## दामोदरमिश्रः

अयं वाणीभूषणनामकच्छन्दोग्रन्थस्य कर्ता।
स्येत्थं परिचयो विद्यते —

"दीर्घघोषकुलोत्पन्नो दामोदर इति श्रुतः ।
छन्दसां लक्षणं येन सोदाहरणमुच्यते ॥

"इति श्रीमैथिलदीर्घघोषकुलोद्भूतदामोदरमि
रचितवाणीभूषणं समाप्तमिति" ।

प्राकृतपिङ्गलव्याख्यायाश्च लक्ष्मीनाथेन १६५७
मान्देऽस्योल्लेखः कृतोऽतोऽनुमीयते यदयं विक्रमस्य १५
ब्दा मध्यभागेऽवश्यमासीत् ।

अस्य रचनेदृशी—

वामकरोदरकलितकमलशोदरशुचिवदना,
कुरुकुलोऽपि तवैव नाम जल्पति गुरुमदना ।
भवदभिलिखनविशेषरसपरिशेषितदिवसा,
मुञ्चति चन्द्रभयेव रजनिमधिजीवितमपि सा ॥
हृदि विनिहितभवदभिसरणरसरङ्गतरङ्गदनङ्गवति ।
भवदीयचितोकनमतिपरा न मनोरथसुखमनुभवति ॥
कति सन्ति न गोपकुले ललिताः स्मरतापहताश्च विहाय च ताः ।
रतिकेलिकलारसलालसमानसमागतमुज्झितमानरसम् ॥
घनमालिनि मालिनमस्य नमस्य नमस्य मुदस्य चिरस्य वृथा ।
भविता परितापवती भवती युवतीजनसंसदि हासकथा ॥

## रामभद्रदीक्षितः

अस्य शृङ्गारतिलकभाणप्रस्तावनया ज्ञायते यदयं दाक्षिणात्य-कुम्भकोणनगरसमीपवर्तिनि कण्डरमाणिक्यग्रामे जातः । अस्य पिता चतुर्वेदयज्वा यज्ञरामदीक्षितः । अनेनाप्पय्यदीक्षितसोदर्यात् नीलकण्ठमखिनः साहित्यं, चोक्कनाथमखीन्द्रात् पदविद्या, भगवत्पादबालकृष्णाद्वाध्यात्मिकशास्त्राध्ययनम् ।

तञ्जानगरेशेन शहजिराजेन कावेर्याः समीपे तिरुविशनल्लूराख्यस्थले "शहजिराजपुरम्" नाम नगरं संस्थापितम् । तत्र नानाप्रदेशेभ्य आहूताः पण्डिताः पर्याप्तभूमिदानसम्मानसत्कृताः संस्थापिताः । तेषु रामभद्रदीक्षितोऽप्यासीत् । शहजिः कलेः ४७८४ त आरभ्य ४८११ सम्वत्सरावधि राज्यमकरोत् । अयं कालः १६८४ वर्षं त आरभ्य १७११ पर्यन्तं भवति । अयमेव समयो रामभद्रदीक्षितस्यापि वर्तते । अस्य ग्रन्था इमे—

१ अष्टप्रासः २ चापस्तवः ३ जानकीपरिणयम् ४ पतञ्जलिचरितम् ५ पर्यायोक्तिनिष्यन्दः ६ प्रसादस्तवः ७ बाणस्तवः ८ विश्वगर्भस्तवः ९ तूणीरस्तवः १० शृङ्गारतिलकम् ।

अस्य रचनेदृशी—

तन्द्रावर्जितनृत्यगीतमतिभागिन्द्रावरोधाङ्गना-
मन्द्रारब्धविपञ्चिकास्वरझरीसान्द्रावदत्तस्तवम् ।
चन्द्रालिसभुजान्तरं स्मरणतोऽघं द्रावयन्तं नृणां,
चन्द्रापीडशरासभङ्गचतुरं तं द्रागुपास्ते मनः ॥
साधारण्यलसत्कृपो नतिकरे साधावसाधावपि,
क्रोधाकृष्टधनुश्च्युताऽस्त्रशिखिनामेधायमानाम्बुधिः ।
आधारो यशसामवाप्तसरयूरोधा मखानां विधौ,
मेधामेधयतु स्तुतो रघुपतिर्मे धातृमुख्यैः सुरैः ॥
अमद्भ्रूवल्लीकं भृशतरलिताऽपाङ्गवलनं,
समुद्यत्सीत्कारं पुलकितकपोलस्थलयुगम् ।
करौ व्याधून्वन्त्याः कनकवलयध्वानमुखरौ,
मुदे वस्तद्भूयान् मुखकमलपानं मृगदृशः ॥
मुखरवलयहस्तो मुग्धगात्रप्रकम्पो भयतरलदृगन्तःप्रस्खलद्वर्णवाक्यः ।
अलिषु निपतितेषूपयुपर्योष्ठबिम्बं विवाशयति मनो मे सुभ्रुवां विभ्रमोऽयम् ॥

## जनार्दनभट्टः

अयं खिस्तस्य १७ शतकपूर्वार्द्ध एव भवितुमर्हति. यतोऽनेन १६ शताब्द्यां विद्यमानस्य भट्टोजिदीक्षितपुत्रस्य भानुजिदीक्षितस्य रसमञ्जर्याश्चर्चा कृता यथा—

विख्याता रघुवंशवद् गुणगणैः शृङ्गारसारा परं,
शृङ्गारे रसमञ्जरीवदमला माधार्थवत् सत्तनौ ।

क्लिष्टा नैषधवच्च मानकरणे कादम्बरीवद्रते,
नानाश्लेषविचक्षणा विजयते सारङ्गरम्येक्षणा ॥

अस्य पिता जगन्निवासगोस्वामी । काव्यमालायामनेन कृतं शृङ्गारशतकं प्राप्यते किन्त्वलेखि वैराग्यशतकमपि । अस्य रचनेदृशी—

विरमत बुधवर्याः ! सङ्गमादङ्गनानां,
कुरुत कलुषवृन्दध्वंसनोग्रं हि धर्मम् ।
न खलु निरयमग्नानुद्धरिष्यत्यजस्रम् ,
कुवलयदलनेत्रा कौतुकं हन्त ! युष्मान् ॥

## माधवभट्टः

अयं मण्डलेश्वरभट्टस्य पुत्र इन्दुमतीगर्भजः १६६७ विक्रमाब्दे बभूव । अस्य भ्राता हरिहर इति तत्कृतसुभद्राहरणनाटकादवगम्यते—

जननीन्दुमती यस्य जनको मण्डलेश्वरः ।
भ्राता हरिहरो यस्य स ख्यातो माधवः कविः ॥
जनताघनतापौघलोककार्योपकारिकाः ।
वहिता न हिताः कस्य साधवो माधवोक्तयः ॥

अस्य रचनेदृशी—

शृङ्गारं हैमवत्याः प्रथयति धनुषा वीरमास्येन हास्यं,
बीभत्सं दृक्कपालैर्भयमहिपतिना भ्रूविजृम्भेण रौद्रम् ।
कारुण्यं प्लुष्टयन्त्योऽद्भुतमसृणविधूपवुर्धैर्योऽच्छिभाग्भिः,
शान्तं चिरेण भूयात् स नवरसमयः शङ्करः शर्मणे वः ॥
उच्चैः सद्म विलङ्घ्य सपहरन्नारामपुष्पोत्कराम् ,
द्रागच्छिन्भ्रु बचालनैर्विकलयन्नारात्पुरन्ध्रीजनम् ।

लाङ्गूलं भ्रमयन्नुदग्रदशनान्निर्दिशन्नेष कोलाहलं,
कुर्वन्नुद्भटपाणिपादनखरः कीशोऽयमुत्सर्पति ॥

## कौण्डभट्टः

अयं ख्रिस्तस्य १७ शतके काश्यामभूद् भट्टोजिदीक्षितस्य ज्येष्ठभ्रातू रङ्गोजिभट्टस्य पुत्रः । अस्य व्याकरणशास्त्रगुरुः शेषकृष्णः शेषकृष्णपुत्रो वीरेश्वरकृष्णस्तथा भट्टोजिदीक्षितः । वेदान्तादिशास्त्रगुरुरस्य पिता रङ्गोजिभट्टः एव । अयं सर्वेषां स्वगुरूणां स्वकीये वैयाकरणभूषणसारे स्मरणमित्थं करोति—

अशेषफलदातारं भवाब्धितरणे तरिम् ।
शेषाऽशेषार्थलाभार्थं प्रार्थये शेषभूषणम् ॥

अशेषफलदातारमपि सर्वेश्वरं गुरुम् ।
श्रीमद्भूषणसारेण भूषये शेषभूषणम् ॥

वाग्देवी यस्य जिह्वाग्रे नरीनर्ति सदा मुदा ।
भट्टोजिदीक्षितमहं पितृव्यं नौमि सिद्धये ॥

भट्टोजिदीक्षितैः श्रेष्ठुर्निर्मिताः कारिकाः शुभाः ।
कौण्डभट्टेन व्याख्याताः कारिकास्ताः सुविस्तरम् ॥

पाणिन्यादिमुनीन् प्रणम्य पितरं रङ्गोजिभट्टाभिधं ।
द्वैतध्वान्तनिवारणादिफलिकां पुम्भावचाग्देवताम् ॥

कौण्डभट्टस्येमे ग्रन्थाः प्रसिद्धाः—१—तर्कप्रदीपः, २—न्यायार्थदीपिका, ३—तर्करत्न, ४—बृहद्वैयाकरणभूषणम् ५—लघुवैयाकरणभूषणसारः, ६—स्फोटवादः, ७—वैयाकरणसिद्धान्तदीपिका चेति

## हरिवल्लभः

अयं कौण्डभट्टकृत—वैयाकरणभूषणस्य टीकाकर्ता खिस्तस्य १७ शतकोत्तरार्द्धे आसीत् । तत्प्रणीतेयं पदार्थदीपिकाख्या टीका । श्रीवल्लभस्य पुत्रः पर्वतीयः स्वपरिचयमित्थं टीकान्ते ददाति—

ज्ञात्वा श्रीफणिवाक्यजालमतुलं नैयायिकोक्तीरपि,
मीमांसानयसारलक्ष्य च मया सम्यक् कृते दर्पणे ।
अस्मिन् भूषणसारतां बुधजनः सोत्कण्ठमालोक्यतां,
यच्चिःश्वासमलीमसो न मुकुरस्तत्त्वार्थबोधक्षमः ॥
आसीत् कूर्मगिरौ धरासुरवरः श्रीवल्लभः कोविदो,
वेदान्तेषु विनोदमञ्जरिरिति ख्याताऽस्ति यन्निर्मितिः ।
तत्सूनुर्हरिवल्लभः समकरोत् सद्युक्तिमत्युज्ज्वलं,
श्रीमद्भूषणसारदर्पणमिमम्मोदाय विद्यावताम् ॥

अन्यश्च श्लोकः—

रमाप्रेमाऽऽमन्दोन्मादवनदन्तं मधुहृतः
श्रुतिस्तोमाऽऽहृत्या परिजनितवेधाननमुदम् ।
अमन्दानन्दाख्यं निखिलजनहृत्पद्मनिलयं
हयग्रीवं वन्दे प्रकृतकृतविघ्नप्रतिकृते ॥

## अनन्ताचार्यः

अयं वारेशास्त्रिणो विचारे महीधरस्य समये १६४५ विक्रमाब्द आसीत् । अस्य माता भागीरथी पिता च नागदेवः । अयं काश्यां वसतिस्म । अनेन कण्वसंहिताया उपरि सायणाचार्यकृतं पूर्वार्द्धभाष्यमवलोक्योत्तरार्द्धभाष्यं वेददीपं इत्यकारि । तत्रायं स्वपरिचयमित्थं ददाति—

व्याख्याता कण्वशाखीयसंहितापूर्वविंशतिः ।
माधवाचार्यवर्येण स्पष्टीकृत्य न चोत्तरा ॥
अतस्तां व्याकरिष्येऽहमनन्ताचार्यनामकः ।
अम्बा भागीरथी यस्य नागदेवः पिता सुधीः ॥
काश्यां वासः सदा सस्य स्थिरा यस्य रमाप्रिये ।
अनेव ग्रन्थमालोच्य दीपिका क्रियते मया ॥
बहूनि सन्ति भाष्याणि प्रणीतानि हि सूरिभिः ।
न पाण्डित्याभिमानेन न च विरास्य लिप्सया ॥
दीपिका रच्यते किन्तु लक्ष्मीकान्तस्य तुष्टये ।
असुना वेदहीनेन मया भीराजितो हरिः ॥

## विश्वनाथः

अयं नृसिंहस्य पुत्रः । अनेन पारस्करगृह्यसूत्रस्य भाष्यमलेखि । अस्य माता गङ्गादेवी । अयं १६६२ सम्वत्सर आसीदिति भाष्यान्तावलोकनात् प्रतीयते । अनेन स्वपरिचय इत्थमदायि—

अभूदानन्दपुरे मुञ्जो नागरो गोत्रकश्यपे ।
लक्ष्मीधरोऽभवत्तस्मात् सूर्यदत्तस्तु तत्सुतः ॥
तस्मादाशाधरो जातो नरसिंहाभिधस्ततः ।
तत्सुतेन कृतं भाष्यं विश्वनाथेन धीमता ॥
पारस्करस्य गृह्यस्य पञ्चखण्डावशिष्टकम् ।
गरिष्ठं सर्वभाष्येषु वह्वर्थं निर्णयान्वितम् ॥
महादेवजगन्नाथपुत्रपौत्रप्रपौत्रकैः ।
गोपनीयं निरीक्ष्यञ्च पठितव्यं समाहितैः ॥

नरसिंहाग्रजोऽनन्तस्तस्य यो वै प्रपौत्रकः ।
लक्ष्मीश्वराभिधः स्तम्भतीर्थात् काश्यां समागतः ॥
उपहासं पुरस्कृत्य ह्रियं कृत्वा तु पृष्ठतः ।
भाष्याण्यन्यानि चालोक्य पञ्चखण्डान्यलीलिखत् ॥
तेनैव चास्य भाष्यस्य पूर्तिर्जाता यथा तथा,
सम्वन्नेत्रग्रहकला १६९२ मिते द्वे चोत्तरायणे ।
समाप्तिमगमद् भाष्यं माघे भूते १४ सिते कुजे ॥

## नृसिंहः

अयं नागरब्राह्मणो नन्दपुरे ख्रिस्तस्य १६ शतकान्त आसीत् । अस्य गर्गसिद्धान्तप्रकाश-नामको ग्रन्थः श्रूयते । अयं पारस्करगृह्यसूत्रभाष्यकर्तुर्विश्वनाथस्य पितेति भाष्याध्ययनात् प्रतीयते । अस्य विषये विश्वनाथो वदति—

गर्गसिद्धान्तपद्मानां प्रकाशोदयहेतवे ।
मार्तण्डाय नृसिंहाय पित्रे श्रीगुरवे नमः ॥
गंगादेवीमहं वन्दे ज्ञानदां मातृरूपिणीम् ।
जातं यस्याः पयःपानात् सरस्वत्यवगाहनम् ॥
अधीत्य सकलं शास्त्रं श्रीनृसिंहाज्जगद्गुरोः ।
तन्यते विश्वनाथेन गृह्यसूत्रप्रकाशिका ॥

## लक्ष्मीदेवी

इयं महाराष्ट्रदेशीया पायगुण्डे—वैद्यनाथभट्टस्य पत्नी, माता च वालम्भट्टस्य । इयं ख्रिस्तस्य सप्तदशे शतक आसीत् । श्रीधारपुरेमहोदयेन बम्बईवैभवप्रेसेऽनया रचिता याज्ञवल्क्य-स्मृत्याचाराध्यायस्योपरि विज्ञानेश्वरेण रचितायां मिताक्षराया-ष्टीका प्रकाशिता । तत्रेयं स्वपरिचयमित्थं ददाति—

'इति श्रीमन्मिताक्षराव्याख्याने महादेवभट्टात्मजोत्तमाङ्गवैद्यनाथार्धाङ्गभूतबालकजननिपायगुण्डे इत्युपाख्यश्रीलक्ष्मीदेवीविरचिते लक्ष्म्यभिधे आचारप्रकरणम्'।

## बालम्भट्टः

अस्य पिता वैद्यनाथः, पितामहो महादेवभट्टः पायगुण्डेजातीयः। अयं नागेशभट्टस्य शिष्यः ख्रिस्तस्य सप्तदशे शतक आसीत्। अस्य माता लक्ष्मीदेवी मिताक्षराया लक्ष्म्यभिधां टीकां कृतवती किन्तु सा पूर्णा नाभूत्। मातृभक्तेन बालम्भट्टेनावशिष्टा टीकाऽलेखि। अयं काश्यां वसति स्म। टीकान्तेऽनेनोच्यते—

'इति श्रीमन्मिताक्षराव्याख्याने महादेवभट्टात्मजवैद्यनाथाङ्गभूत—पायगुण्डे—इत्युपाख्यबालकृष्णविरचित लक्ष्म्यभिधे व्यवहारप्रकरणे' इति। बालम्भट्टस्यैव नामान्तरं बालकृष्ण इति

## चन्द्रकीर्तिसूरिः

अयं राजपूतानाप्रान्तस्य नागौरग्रामे तपागच्छीयो जैनाचार्यः ख्रिस्तस्य १७ शतके वसति स्म। अनेनानुभूतिस्वरूपाचार्यकृतसारस्वतव्याकरणस्य टीकाऽलेखि। अस्यैव शिष्यो हर्षकीर्तिर्येन योगचिन्तामणिनामको ग्रन्थोऽलेखि। अयं वदति—

सूरीश्वरः प्रवरसिंहशिरोऽवतंसः,
श्रीचन्द्रकीर्तिगुरुपादयुगप्रसादात्।
गम्भीरचारुतरवैद्यकशास्त्रसारं,
श्रीहर्षकीर्तिवरपाठक उद्दधार॥

## राजहंससरस्वती

अयं सन्यासी वेदान्तसारे सुबोधिनीतिटीकाकर्तुर्नृसिंहसरस्वतीशिष्यः १६६३ शकाब्द आसीत्। अयं वेदान्तशास्त्रनिष्णातः षडङ्गभाष्यकर्ता अस्यैकं पुस्तकमधुनापि बड़ौदाराजकीयपुस्तकालये प्राप्यते। यत्रायं स्वगुरुमित्थं स्मरति—

नारायणेन्द्रपादाब्जं विद्येन्द्रचरणाम्बुजम्।
नृसिंहेन्द्रपदाम्भोजं कैवल्येन्द्रपदाम्बुजम्॥
एतानि पद्मरत्नानि चत्वारि हृदयाम्बुजे।
मामकीने प्रकाशन्तां भुक्तिमुक्तिप्रसिद्धये॥

## माधवभट्टः

अयं कर्णाटदेशगत-वारीग्रामराज्ञः शूरजनस्य समीपे १६२८ विक्रमाब्दे वसति स्म। अस्य प्रपितामहो विष्णुशर्मा, पितामहो यज्ञेश्वरः पिता वाचिदेवस्तथा ज्येष्ठबन्धुर्लक्ष्मणः। अस्य दानलीला-काव्यं काव्यमालायां प्राप्यते। रचना चेदृशी—

काचिद् गोपनितम्बिनी निजकरेणोद्धृत्य किञ्चिद्दधि,
स्वीयं पश्यत जन्तुरोति वचनं व्याहृत्य वक्त्रान्तिकम्।
गत्वा गण्डतले विलिप्य झटिति प्रत्यागमत्स्वान्तरं,
दृष्ट्वा तज्जहसुर्भृशं करतलैरुच्चैः स्त्रियस्तालिकाः॥
रे! रे चञ्चल!! मुञ्च मेऽञ्चलमलं किं लोचने नर्तयेः,
सख्यः पश्यत धाष्ट्यमस्य महितां यश्चात्मनो रक्षति।
इत्युक्त्वा करतोऽपहृत्य वसनं वंशीञ्च गत्वा द्रुतम्,
पश्चाद्देहि गृहाण चेत्यभिदधे साङ्गुष्ठदर्शंस्मितम्॥

## मधुरवाणी

इयं कुत्रत्येति वक्तुं न शक्यते किन्त्वस्याः पुस्तकानि माईसोरे बङ्गलोरे च बाहुल्येन प्राप्यन्त इत्यनुमीयते सम्बन्धस्तयोः यो जन्मस्थानादपरो न भवितुमर्हति । अस्य ग्रन्थानां तथा यज्ञनारायणदीक्षितकृत-साहित्यरत्नाकरकाव्य, राजचूडामणिकृत-रुक्मिणीपरिणयकाव्ययोरवलोकनेन प्रतीयते, यदियं १६१४-१६६४ ईसाब्दमध्ये तञ्जोरनृपते रघुनाथनायकस्य पत्नीत्वेन वा परिचारिकात्वेन नियुक्ताऽऽसीत् ।

रघुनाथनायकः श्रीरामभक्त आसीत् । अयं श्रीरङ्ग, विजयराघवपुर कुम्भकोण मन्दिराणां निर्माता । अस्य सभायामनेके कवयो विद्वांसश्चासन् । नलाभ्युदय, अच्युताभ्युदय, रामायणसारसंग्रह, महाभारतसारसंग्रह, रामचरितादिमहाप्रबन्धानां तेलुगु-संस्कृतभाषया निर्माता अयम् । अस्यान्तिकेऽनेकाः काव्यनिर्माणशक्तिशालिन्यः स्त्रियः आसन्निति मधुरवाण्याः श्लोकेनानेन प्रतीयते—

सर्वोत्तरस्वादिमसंस्कृतान्ध्रप्रबन्धनिर्माणपवेलिमानि ।
यशांसि भूयांस्यवतारयन्त्यः, सहस्रशः सन्ति सरोजनेत्राः ॥

एकदा रात्रौ मधुरवाणी रघुनाथनायकमुक्तवती यद् भावत्कमान्ध्रवाण्यां लिखितं रामचरितमधीत्य मदीयं चेतः परमं तोषमाप्नोति ।

हरेश्चरित्रं बहु तत्र राम-कथासुधा कर्णरसायनं नः ।
आस्वाद्यमानापि सहस्रवारमयातयाम्नैव सुखस्य दोग्ध्री ॥

इत्थं महाकवयित्र्या मधुरवाण्या कृतां स्वकाव्यप्रशंसामाकर्ण्य रघुनाथनायको मनसि विचारयामास यदिदं यदि

मदीयं काव्यं संस्कृतभाषायामनूदितं स्यात्तदा परमोत्तमं कार्यं भवेत। एवञ्चिन्तयन निद्रामाप। तत्र स्वप्ने भगवान रामस्त-मुक्तवान् यदिद कार्यं मधुरवाणी कर्तुं शक्नोति। प्रभाते मधुर-वाणी तदनुवादकरणाय तेन प्रार्थिता सहर्षमङ्गीकृतवती। अ-स्मिन् विषये मधुरवाणी वदति—

रसोत्तरं रामकथाऽनुबन्धि, काव्यं मया कल्पितमान्ध्रवाण्याम्।
कार्यं कथं संस्कृतवाग्भिरेतदित्येव चिरो गणयन्निवासम् ॥

मधुरवाणी तदनुवादं कृत्वा तस्मै श्रावयामास। परमं सन्तोषमाप्य स मधुरवाण्यै मधुरवाणीत्येवोपाधिं दत्त-वान्। अत्र मधुरवाणी वदति—

चतुरमधुरवाणीं सम्यगाकर्ण्य यस्यास्सदसि मधुरवाणी नाम दत्तं त्वयैव।
सरसकृतविधायां साधुमेधाविशेषा स्वधिकपटुरशेषास्वम्बुजाक्षीषु सैषा ॥

मधुरवाणी स्वविषय इत्थं वदति—

चातुर्यमेति कवितासु चतुर्विधासु, वीणाकलाप्रकटने भवति प्रवीणा।
प्रज्ञामियं निपुणमञ्चति पाणिनीये मेधां व्यनक्ति बहुधा विविधावधाने ॥

तत् तादृग्घटिकार्धनिर्मितशतश्लोकी फणिग्रामणी।
वाणी प्राकृतशास्त्रनैपुणसमुन्मीलद्यशःश्रीजुषा ॥
वीणावादकलाविनोदसमये धृत्वा रसस्याशतं।-
सद्यः संसदि साधु पूरयति या दत्ता कवीन्द्रैस्तथा ॥

अस्या रचनेदृशी—

संख्यावतां सर्वपथीनधीभिः, संशोधिता चेत् कविता सभायाम्।
कस्तूरिकाचन्दनकुङ्कुमाद्यैः, सद्वर्तिताङ्गी युवतीव दीव्येत् ॥

## दाराशिकोहः

अयं शाहजहाँबादशाहस्य पुत्रः। श्रूयते दाराशिकोहेन काश्यामुषित्वा श्रीशेषकृष्णवंशजान्महादेवपन्तशेषादध्ययनञ्चकार। काश्या वर्त्तमाने दारानगरे दाराशिकोहोऽध्ययनसमये वसति स्मेति किम्वदन्ती। एतद्गुरुर्महादेवपन्तशेषः आहिताग्निरासीदतस्तत्प्रार्थनया दिल्लीं गन्तुमशक्तस्तेन सहाध्ययनकालिकं मित्रं पण्डितराजं जगन्नाथं प्रहितवान्। एतादृशमेकस्यानुसन्धानकारिणः कथनं प्रायो लवङ्गीपण्डितराजयोः सम्बन्धदूषकं ज्ञेयम्।

दाराशिकोहेन १७१२ विक्रमाब्दे ४२ वर्षावस्थायां समुद्रसङ्गमो ऽरचि याऽधुना पूनास्थिते भाण्डारकरप्राच्यविद्यामन्दिरे वर्त्तते। एतन्नामव्याख्यायां दाराशिकोहो वदति—

'अवश्यं ज्ञातव्यानां सकृत्तानां कतिपयवाक्यानां सारस्य संग्रहमकरवम्। ज्ञानिनोर्द्वयोः (हिन्दुमुस्लिमयोः) अपि मतसमुद्रयोरिह सङ्गम इति नाम चास्यापद्यम्। इत्थं किलोपदेशो महानुभावानां यन्निर्मत्सरतया तत्त्वविवेचनम्' इति। समुद्रसङ्गमग्रन्थारम्भे दाराशिकोहो वदति—

"सर्वत्र प्रकटः स सर्वाभासः स आदिः सोऽन्तः। तद्व्यतिरिक्तं वस्तु नास्तीति प्रतिवेशी सहवासी च मत्कृते सर्वमेव सः।............कथयति वीतराग—विगतशोकसन्दोह—महम्मददाराशिकोहः। एवं यद्विज्ञाय सकलतत्त्वं निर्णीय च सत्कारमवादवदतारपद्यमामाद्य" इति। अथ समुद्रसङ्गमस्य साफल्यविषये वदति—

'वेदसमुद्रं मथित्वा ज्ञानरत्नमेकमीदृशं निष्काशितं यद्वैदिकैर्यश्च समुद्रमन्थनं कृतं। निष्काशितेषु चतुर्दशरत्नेष्वपि न प्राप्तम्। आराधना परमेश्वरस्य विज्ञापना च या कृता तया समुद्रसङ्गमसमाप्तौ सामर्थ्यं प्राप्तम्' इति।

दाराशिकोहेन 'सिर्रे अकबर' नाम्ना उपनिषदा-मनुवादोऽपि कृतो योऽद्याप्युपलभ्यते।

## माधवोपाध्यायः

अयं सौराष्ट्रे कश्चित् १७ शतके खिस्तस्यासीदिति श्रीयादवजिवैद्यस्य मतम्। माधवोपाध्यायस्य 'आयुर्वेदप्रकाश' नाम्ना ग्रन्थः प्राप्यते, पाकावलिश्च श्रूयते। आयुर्वेदप्रकाशे भाव-मिश्रकभावप्रकाशस्योल्लेख इति माधवोपाध्यायस्य स्थितिः खिस्तस्य सप्तदशे शतके एव भवितुमर्हति, किन्तु अयं सौरा-ष्ट्रिय इति न सिद्ध्यति यत आयुर्वेदप्रकाशस्यान्ते माधवोपा-ध्यायः स्वं काशिवासिनं वदति, यथा—"इत्यायुर्वेदप्रकाशे श्रीमदुपाध्यायसारस्वतकुलावतंसकाशीनिवासिमाधवविर-चिते" इति।

आयुर्वेदप्रकाशः रसशास्त्रग्रन्थः। एतद्विषये माधवो-पाध्यायो वदति 'सारभूतं प्रकाशितम्' इति। एतत्कथनं तदा सत्यं प्रतीयते यदा सत्स्वपि रसकामधेनु, रसमङ्गल, रसा-वतार, रसराजलक्ष्मी, रसप्रकाशसुधाकर, रसेन्द्रचिन्तामणि, रसप्रदीप, रससङ्केतकलिका, रसरत्नसमुच्चयप्रभृतिषु रसग्रन्थेषु आयुर्वेदविद्यापाठचालकैरयमेव पाठ्यग्रन्थत्वेनोरीकृतः। आ-युर्वेदप्रकाशस्य मङ्गलश्लोकयोर्द्वितीयो दिङ्नागाचार्यकृतकुन्द-

मालानाटकेऽपि लभ्यते । किमत्र कारणमिति न जाने । तौ श्लोकाविमौ—

देवेन्द्रमौलिमन्दारमकरन्दकणारुणाः ।
विघ्नं हरन्तु हेरम्बचरणाम्बुजरेणवः ॥
जम्भारिमौलिमन्दारमालिकामनुपायिनः ।
पिबेयुरन्तरायाब्धिं हेरम्बपदपांसवः ॥

## कूरनारायणः

अयं विशिष्टाद्वैतमतानुयायी खिस्तस्य १७ शतके द्रविडदेशे बभूव । अस्य सुदर्शनशतकं नाम्ना ग्रन्थः प्राप्यते । अस्य रचनेदृशी—

मा गाम्मोषं ललाटानल इति मदनद्वेषिणा ध्यायतेव,
स्रष्टा प्रोज्झिद्वासाम्बुजदलपटलप्लोषमुत्पश्यतेव ।
वज्राग्निर्मा स्म नाशं व्रजदिति चकितेनेव शक्रेण वद्धैः,
स्तोत्रैरब्जेश्वरस्य द्यतु दुरितशतं द्योतमाना द्युतिर्वः ॥

## नीलकण्ठाध्वरि.

अयं विक्रमसम्वत्सरस्य १७ शताब्द्यामासीत् । अस्य पिताऽप्पय्यदीक्षितः । असौ द्रविड़देशीयः श्रीकण्ठमतानुयायी । अनेनानेके यज्ञाः कृता अत एव सर्वस्ववेदीत्युपाधिनाऽलंकृतः । अन्यमे ग्रन्थाः—

१ व्याकरणभाष्यप्रदीपव्याख्या, २ शिवतत्त्वरहस्यम्, ३ शिवलीलार्णवमहाकाव्यम्, ४ नीलकण्ठविजयचम्पूः, ५ कलिविडम्बनम्, ६ आनन्दसागरस्तवः, ७ शान्तिविलासः ।

अस्य रचनेदृशी—

स्तोतारः के भविष्यन्ति मूर्खस्य जगतीतले ।
न स्तौति चेत् स्वयं च स्वं कदा तस्याऽस्तु निर्वृतिः ॥

वाणीनिकेतनतया घनसारगौरः, कल्हारकेशररुचः कमलानुषङ्गात् ।
मातर्जयन्ति शरणागतजो कचेतोमालिन्यमार्जनवशादसिताः कटाक्षाः ॥

अस्ति स्वं चेद् धनमखिलमप्यर्थिसात्कर्तुमर्हं,
नास्ति स्वं चेत्तदपि सुतरां भोगहेतोरपास्यम् ।
अस्पृष्टापि स्वयमतिरहः स्थाप्यते यत्तदन्त-
स्तस्मिन् हेतुः क इति निभृतं तर्कयामो न विद्मः ॥

## अनुभूतिस्वरूपः

अयं सारस्वतव्याकरणस्य प्रणेता । कदाचिद्विद्वत्सभायां 'पुंसु' इति वक्तव्ये 'पुंक्षु' इत्युक्तवान् । ततः सर्वेऽपि करतलं घोषयन्तो हास्यं व्यधुः, तेन यातामर्षोऽयं वाणीभगवतीसम्मत सूत्राणां सारस्वत व्याकरणमेकरात्रौ चकार । तत्र 'असंभवे पुंसः कक्षा' इति वार्तिकेन स्वोक्तिं सत्यां चकार । "अयं हि पाणिनेः प्रागासीत् । एतच्च तदुल्लेखेनैव ज्ञायते, यथा—'इन्द्रादयोऽपि यस्यान्तं न ययुः शब्दवारिधेः । प्रक्रियां तस्य कृतस्नस्य क्षमो वक्तुं नरः कथम्' यदि तदानीं पाणिनीयं व्याकरणं स्यात्तदा नायमिन्द्रादीनुदाहरेत्, यत एतदुत्कृष्ट व्याकरणकर्तुः पाणिनेः सत्त्वादिन्द्रादीनामुदाहरणमयुक्तम् । आसीदयं भगवद्भक्तो यत्र तत्र स्थले भगवत्सम्बन्धिनः उदाहरणस्य दर्शनात्—यथा कृदन्ते कारकस्योदाहरणे 'रकारादीनि नामानि शृण्वतो मम पार्वति । मनः प्रसन्नतामेति रामनामाभिशंकया' । सारस्वतानमत्रगासमये अयोध्यायां सन्यासाश्रमे आसीदयम् । वाधक्येनैव

अयं ग्रन्थः शतकसाम्ना ग्रन्थो रचितः चेदृशी—

अवेति भिन्नः कुलपासराणां सवेऽतिभिन्नः कुलपाऽमराणाम् ।
सदासकान्तायन मोहराय, सदा सकान्ताय नमो हराय ॥

नूनं नमः सेनसनिस्नमेनकुमारमनोमराज्कुलमानकम् ।
मानं मिमानं कुलिमानिनीनाममनूननामानमिनं नमामि ॥

## कनककुशलः

अयं तपागच्छीयहीरविजयसूरेः शिष्यः कनककुशलः ।
अनेन भक्तामरस्तोत्रस्य टीका १६४२ विक्रमाब्दे लिखिता ।
अयं स्वविषये टीकायां अन्ते वदति—

श्रीमत्तपोगणगगनाङ्गणदिनमणिहीरविजयसूरीणाम् ।
शिष्याणुना विरचिता वृत्तिरियं कनककुशलेन ॥
नयसागररसेन्दुमिते वर्षे सुविराजनाम्नि वरनगरे ।
बालजनविबोधनार्थं विजयदशम्यां हि सुसमाप्तासीत् ॥

## सुरेन्द्रवल्लभः

अस्य प्रधानं नाम गोकुल इति । अयं स्वकीये सुन्दरीशतके नामकं काव्ये स्वयमेव वदति ।

भारतेव क्रियते स्तोत्रैः सन्तुष्टया द्विजन्मना ।
श्रीगोकुलस्य सुकवेरस्यैव वल्लभस्याभिधा ॥

सुन्दरीशतकगतनिम्नलिखितश्लोकेन ज्ञायते यदयं सं॰ १६५३ विक्रमाब्दे—

अनलशररसधराङ्के वर्षे माघस्य शुक्लशुभपक्षाम् ।
गुरुवारे रेवत्यां सम्पूर्णं सुन्दरीशतकम् ॥

केचिद् वदन्ति यदुत्प्रेक्षावल्लभोपाधिर्गोकुलश्चिन्तामणि भट्टापरनामाऽयमेव शिवभक्तदासो भिक्षाटनकाव्यकर्ता, परं तत्र प्रमाणाभावात् सिद्ध्यति। उत्प्रेक्षावल्लभस्य रचनेदृशी—

वक्षसि सुमुखि ! भवत्या मनोहरं कान्तिमण्डलं जयति।
भ्रमितमभिनववयसा कामनृपादेशचक्रमिव ॥
केतकि ! यदि तव न कृतं परिशीलनमादरान्महेशेन।
इयता न काऽपि हानिः सौरभ्याकृष्टमधुपायाः ॥

किं कालरात्रिरथवा किमु कालदूती किं पापसंहतिरनेकविधप्रवृत्ता।
किं मर्मकृन्तनकरी शितहेतिरेवेत्येका व्यलक्ष्यदथोक्तिभरेव रात्रिम् ॥

## भिक्षाटनः

अस्य कवेः प्रधानं नाम शिवभक्तदास इति। अनेन भिक्षाटनकाव्यस्य रचनाऽकारि लोकेऽसौ भिक्षाटननाम्नाऽयं प्रख्यातः। अयं स्वयमेव स्वकीये काव्ये वदति—

वृत्तं वसन्ततिलकं विषयश्च जीवभिक्षाटनं कविरसौ शिवभक्तदासः।
शृङ्गार एव हि रसस्तदिह प्रबन्धे, श्रद्धा न कस्य यदि सूक्तिविनोदशीलः ॥

अयं विक्रमस्य १७ शताब्द्यामुत्पन्नः। अनेन त्रिपुरासुरवधानन्तरं शिवस्य भिक्षाटनं भिक्षाटने काव्ये वर्णितम्। अस्य रचनेदृशी—

अस्यन्ति यानि विरहे विदलानि यानि,
योगे प्रियेण सखि ! किं वलयैः फलं तैः।
नैवास्ति यैर्विपदि संपदि चोपयोग—
स्तैः सङ्गरं न खलु वाञ्छति कोऽपि लोके ॥
वर्धते स्पर्धयेवासौ सम्पदा शतशाखया।
अङ्कुरोऽवस्करोद्भूतः पुरुषश्चाकुलोद्भवः ॥

अस्थानगामिभिरलङ्करणोपपन्ना,
भूयःपदस्खलननिन्हुतिरप्रसन्ना ।
वाणीव काऽपि कुकवेर्जनहास्यपात्रं
प्राङ्निर्गता निजगृहाद् वनिता मदान्धा ॥
श्वासो निःश्वसितेऽप्यसूयति मनोजिघ्रः सपत्नीजने,
श्वश्रूरिङ्गितदैवतं नयनयोरीहालिहो यातरः ।
तद् दूरादयमाञ्जलिः ! किं किमधुना दृग्भङ्गिभावेन ते,
वैदग्धीमधुरप्रबन्धरसिक ! व्यर्थोऽयमत्र श्रमः ।"

## गोविन्दठक्कुरः

अथ काव्यप्रदीपालङ्कारस्य कर्ता महामहोपाध्यायो मिथिलायां श्रीरविकरवंशे जन्म लेभे । यद्यपि सम्यक्तया वक्तुं न शक्यते, यदनेन कदा स्वजन्मनाऽलंकृतो मिथिलाप्रदेशस्त-थापि प्रायः ख्रिस्तस्य षोडशशतकेऽयमासीत्, यतो निर्णय-सिन्धुकर्त्रा कमलाकरभट्टेन स्वरचितकाव्यप्रकाशव्याख्यायां १६६८ मिते विक्रमाब्दे गोविन्दठक्कुरस्य नाम गृहीतम् । छल-ङ्कारशास्त्रस्य काव्यप्रदीपो महाग्रन्थः । अस्योद्योताभिधा व्या-ख्या नागेशेन लिखिता, किन्तु नाधुना सा पूर्णोपलभ्यते । अस्य माता सोनादेवी पिता केशवः, भ्रातरोऽनेके इति प्रदीपस्य प्रथमश्लोकेन ज्ञायते । मिथिलाप्रदेशस्य भटसिमरिग्रामेऽधुना-ऽपि गोविन्दठक्कुरवंश्या निवसन्ति ।

अस्य रचनेदृशी—

मध्ये व्योम स्फुरति सुमनोधन्विनः शाणचक्रम्,
मन्दाकिन्या विपुलपुलिनमभ्यागतो राजहंसः ।

अर्धच्छेदे स्वरितचरणन्यासमाकाशलक्ष्म्याः,
संसर्पन्त्याः श्रवणपतितं पुण्डरीकं मृगाङ्कः ॥
चकोरीं पाण्डित्यं मलिनयति दृग्भङ्गिमहिमा,
हिमांशोर्द्वैतं कपलयति वक्त्रं मृगदृशः।
तनो वैदग्ध्यानि स्थगयति कचं किंच वचनं,
कुहूकण्ठीकण्ठध्वनिमधुरिमाणं तिरयति ॥

## मार्शलः

अयं फ्रांसदेशे १६६० ख्रिस्ताब्दे बभूव। श्रूयतेऽनेन काश्यामागत्य संस्कृतभाषाऽध्ययनमकारि। यद्यप्यस्य न श्रूयते कश्चिद् ग्रन्थो येनाऽस्य परिचयमिमवेस्तथापि इङ्गलैण्डस्य ए० आर्थर ई० मैक्डोनल्महोदयो संस्कृतभाषाक्रम्य परिशिष्टाङ्के वक्ति यन्मार्शल एव पाश्चात्यभूमौ सर्वप्रथमं संस्कृतभाषां पठितवान्।

## ब्रह्मानन्दसरस्वती

अयं मधुसूदनस्वामिसमकालिको रामाचार्यकृत-तरङ्गिण्याः खण्डनेऽद्वैतसिद्धेरुपरि लघुचन्द्रिकां, सिद्धान्तबिन्दोरुपरि रत्नावलीं, सूत्रमुक्तावलीञ्च लिखितवान्। अस्य दीक्षागुरुः परमानन्दसरस्वती विद्यागुरुश्च नारायणतीर्थः। अयं ख्रिस्तस्य शप्तदशशताब्द्यां बभूव। लघुचन्द्रिकाया अन्तेन ज्ञायते यच्छिवरामोऽपि कश्चिदासीत् पूज्योऽस्य।

## अच्युतकृष्णानन्दतीर्थः

अयं कावेर्यास्तटवर्तिनि नीलकण्ठेश्वरे वसति स्म। अयं ख्रिस्तस्य १७ शतके बभूव। अस्य गुरुः स्वयंप्रकाशानन्दश्छायावलनिवासी अयं सिद्धान्तलेशोपरि कृष्णालङ्कार

नाम्नीं टीकां लिखितवान्। तैत्तिरीयोपनिषदि श्रीशङ्कराचार्यभाष्यस्योपरि वनमाला नाम्नी टीकाऽप्यनेन लिखिता। अस्य गुरुभक्तिं कृष्णातङ्काग्रारम्भस्य श्लोकोऽयं व्यनक्ति—

आचार्यचरणद्वन्द्वस्मृतिर्लिखकरूपिणम्।
मां कृत्वा कुरुते व्याख्यां नाहमत्र प्रभुर्यतः॥

## श्रीनिवासाचार्यः

अयं रामानुजसम्प्रदायावलम्बी कौण्डिन्याचार्यस्य सूनुः ख्रिस्तस्य सप्तदशे शतके बभूव। अस्य जानकीचरणचामरनाम्नि काव्य शास्त्रे रचना चेदृशी—

अम्बरचलाञ्चलरैमद्भ्रमरिडनसुपासवगृध्नौः।
गृह्णतां दृशगुणप्रतिमल्लवल्लभा वरणचामरस्तेतन्॥
स्मेरेन्दीवरसुन्दरी परिहृतामरतोकबोधश्रिया,
राजच्छैवलमञ्जरीं जलद्राल्लोहितं मोहिनीम्।
इन्दूनुन्मिदलदुग्धसिन्धुविहरन्माधुर्यसिन्धून्सुखीं,
कामध्याकलये निरङ्कुशदयाकैवल्यकल्लोलिनीम्॥
सकला शकला न त्यजति जलदालीजर्जनिता,
न सन्ध्यान्तर्धानाद्भुतिसमपरं ध्यायति पुनः।
विमुञ्चन्त्यारुण्यं तरणिकिरणान्तूर्णसतवे
तवालोक्य श्लोक्याश्वरणनखचिकलमसणरुचः॥

## श्रीनिवासाचार्यः

अस्य पिता वाधूलकुलसन्ततिः गोविन्दाचार्यः, गुरुश्च दोद्दयाचार्यः। अयं ख्रिस्तस्य सप्तदश्यां १७ शताब्द्यां बभूव। अस्य यतीन्द्रमतदीपिकाग्रन्थः।

## श्रीनिवासाचार्यः

अयं द्वितीयश्रीनिवासाचार्यस्य पुत्रः। अस्य माता लक्ष्माम्बा। अस्य ज्येष्ठो भ्राताऽन्नयाचार्यः। अयं शठमर्षणकुले कौण्डिन्यगोत्रे जातः। श्यामतीर्थस्य चन्द्रिकायाः खण्डनमयं कृतवानतः खिस्तस्य सप्तदशशताब्द्या अन्तिमे भागेऽयं भवितुमर्हति। अनेनानन्दतारतम्यस्यापि खण्डनमलेखि। अस्य अरुणाधिकरणसरणिविवरणेन ज्ञायते यदयं स्वज्येष्ठभ्रातुरेव शिष्यः। अस्य ग्रन्थाः—

१ तत्त्वमार्तण्डः, २ ॐकारवादार्थः, ३ तत्त्वदर्पणम्। ४ नयद्युमणिः, ५ भेददर्पणम्, ६ अरुणाधिकरणसरणिविवरणम्, ७ जिज्ञासादर्पणम् ८ ज्ञानरत्नप्रकाशिका, ९ विरोधनिरोधभाष्यपादुका, १० प्रणवदर्पणम्, ११ सहस्रकिरणी।

## बुक्किवेंकटाचार्यः

अयमन्नयाचार्यस्य तृतीयः पुत्रः। अनेन वेदान्तकारिकावली लिखिता। अस्य जनिः १७ खिस्ताब्दे बभूव।

## रामानन्दसरस्वती

अयं गोविन्दानन्दस्य शिष्यः। अने ब्रह्मसूत्राणां ब्रह्मामृतवर्षिणी नाम्नी टीका, पद्मपादाचार्यस्य पञ्चपादिकाया उपरि विवरणोपन्यासश्च लिखितः। अयं खिस्तस्य सप्तदशशताब्द्यामुत्पन्नः।

## सदानन्दयतिः

अयं स्वनाम्ना सह 'काश्मीरिक' शब्दं लिखति, तेनायं काश्मीरिक एव मन्तव्यः। अस्य अद्वैतब्रह्मसिद्धिनामको ग्रन्थः प्राप्यते अयं खिस्तस्य सप्तदश-शताब्द्यामासीत्।

## लखिमा

इयं ख्रिस्तस्य सप्तदशशतकोत्तरार्धे मिथिलाप्रान्ते जाता श्रूयते दरभङ्गाधिपतेर्गृहेऽस्याः पूर्णः प्रभावः । इयं लखिमा ठकुरानीतिनाम्ना तीरभुक्तिप्रदेशे सातिशयं प्रसिद्धा । अस्याः कश्चिद् ग्रन्थो नाधिगतः किन्तु रचनेदृशी—

नाभीबिलान्तरविनिर्गतपन्नगीयं सम्प्रस्थितानयनखञ्जनभञ्जनाथ ।
नाशामुदीक्ष्य गरुडभ्रमवारणाय, गुप्तेव कुम्भकुचपर्वतयोरधस्तात् ॥

अयमहो रजनीचरकेसरी गिरिदरीशयनात् सहसोत्थितः ।
तिमिरवारणकुम्भविदारणोच्छ्वलितरक्तभरैरिव लोहितः ॥

जागर्ति लोको ज्वलति प्रदीपः सखीजनः पश्यति कौतुकेन ।
क्षणैकमात्रं कुरु धीर ! धैर्यं बुभुक्षितः किं द्विकरेण भुङ्क्ते ॥

कितव ! न मयि तव दोषः प्रणयाप्रणयादिकारणं कालः ।
छाया प्रिया निदाघे शिशिरे सैवाऽप्रिया भवति ॥

बाले ! विश्रामकाले तव वदनविधौ कान्तिपानीयपूरे,
मग्नस्मे नेत्रयुग्मं कुचकलशसमालम्बनं प्राप्य तस्थौ ।
तस्मान्नाभीहृदान्तं सुललिततत्रिवलीप्रान्तकान्त्या वसन्तं
दूरादालोक्य भीतं द्वयमपि कुशलं नैव हातुं शशाक ॥

रत्नाकरो हि भवनं गृहिणी च पद्मा किं देयमस्ति भवते जगदीश्वराय ।
राधागृहीतमनसो मनसो हि दैन्यं दत्तं मया निजमनस्तदिदं गृहाण ॥

आक्रान्ता दशमश्वजस्य गतिना संमूर्च्छिता निर्जले,
तुर्यं द्वादशवद् द्वितीयमतिमत्येकादशाभस्तनी ।
सा पञ्चो कटिपञ्चमा च नवमभ्रूः सप्तमीवर्जिता,
मासाऽस्त्यष्टमवेदना त्वममुना तूर्णं तृतीयो भव ॥

अत्र राशीनामाधारेण दूती: तस्या अवस्थां वर्णयति, राशयश्च मीन, मेष, वृष, मिथुन कर्क, सिंह, कन्या, तुला, वृश्चिक, धनु:, मकर, कुम्भाख्या द्वादश। द्वितीयमतिमती घृषा-बुद्धि: अर्थात् मूर्खा वा मुग्धा, एकादशाभस्तनी कुम्भस्तनी, कटिपञ्चमी सिंहकटि:, नवमभ्रू: धनुषाकृतिकभ्रू:, सप्तमी वर्जिता तुलाहीना अर्थात् अतुलनीया, सा षष्ठी कन्या दशमध्वजस्य मीनकेतो: कामस्य गतिना आक्रान्ता, निर्जले तुर्य द्वादशवन्मूर्च्छिता अर्थात् कर्कमीनसदृशी, अष्टमवेदनां वृश्चिकदंशनपीडां प्राप्ता अस्ति कृते इत्यस्याहार: त्वम् तूर्णं तृतीयः अर्थात् मिथुनो भव सङ्गच्छस्वेति।

## रंगनाथ:

अयं ब्रह्मसूत्रस्य शाङ्करभाष्यानुसारिण्या वृत्ते: कर्ता। अयं ब्रह्मसूत्रस्य प्रथमाध्यायगतद्वितीयपादे २३ सूत्रान्तरं "प्रकरणत्वात्" इत्येकं नवीनं सूत्रं स्वीकरोति। यद्यपि भामतीकार: सूत्रमिदं भाष्यान्तर्गतमेव मन्यते तथापि वैयासिकन्यायमालाकारेण भारतीतीर्थेन पुरैव सूत्रमिति स्वीकृतमासीदत एव तदनुयायी रङ्गनाथ:। अस्य स्थितिकाल: ख्रिस्तस्य सप्तदशशताब्दी।

## सुदर्शनगुरु:

अयं दोद्दयाचार्यस्य शिष्य: सप्तदशशतके ख्रिस्तस्यासीत्। अनेन महाचार्यकृत-वेदान्तविजयस्य व्याख्या मङ्गलदीपिका नाम्नी लिखिता।

## विट्ठलनाथदीक्षितः

अयं वल्लभाचार्यस्य पुत्रो गोसाईंजीनाम्ना प्रख्यातः। अनेन वल्लभसम्प्रदायस्य विस्तारः कृतः। अस्य गिरिधरराय, गोविन्दराय, बालकृष्ण, गोकुलनाथ, रघुनाथ, यदुनाथ, घनश्यामनामानः सप्तपुत्रा आसन्। एषां सर्वेषां सम्प्रदायाः प्रधानविषयेष्वैक्यमावहन्तः प्रायः पार्थक्यमावहन्ति। हाँ! गोकुलनाथस्य शिष्येषु भिन्नता काचिदवश्यमेव वर्तते। विट्ठलनाथदीक्षितस्य सुबोधिनीटिप्पणी तथा विद्वन्मण्डनं प्राप्यते। इदं शुद्धाद्वैतानुयायिभिः पुरुषोत्तम, गिरिधर, बालकृष्णैः क्रमशोऽणुभाष्यटीका, शुद्धाद्वैतमार्तण्ड, प्रमेयार्णवेषु प्रमाणकोटावादत्तम्।

## व्रजनाथभट्टः

अयं खिस्तस्य १७ सप्तदशशताब्द्यामुत्पन्नः। अनेन शुद्धाद्वैतसम्प्रदायाचार्यस्याणुभाष्योपरि मरीचिकानाम्नी वृत्तिः कृता।

## तुलसीदासः

अयं कान्यकुब्जब्राह्मणो [बांदाप्रान्तगत—राजापुरग्राम] निवासी। अस्य पिता आत्मारामो, माता हुलसी, पत्नी च दीनबन्धुपाठकस्य कन्या रत्नावली। अयं खिस्तस्य १५ शतके बभूव। अयं शूकरक्षेत्रवासिनो नृसिंहस्य शिष्यः पुरा रामबोलानामाऽऽसीत्। अयं नृसिंहसंहितायां वाल्मीकेरवतारः कथितो यथा—

वाल्मीकिस्तुलसीदासः कलौ देवि भविष्यति ।
रामायणकथां साध्वीं भाषारूपां करिष्यति ॥

अयं संस्कृतभाषाया बहूनां ग्रन्थानां सद्भावान् गृहीत्वा रामचरितमानसं हिन्द्यां निर्मितवान् भक्तिभावभरितम्। अस्य विनयपत्रिका, दोहावली, कवित्तरामायण, गीतावल्यादीनि पुस्तकान्यन्यान्यपि सन्ति । अनेन काश्यां निवसता १६८० विक्रमाब्दे शरीरत्यागः कृतः । अधुनाऽस्य स्वत्रियेऽद्वितीयः । मधुसूदनसरस्वतिनाऽस्य विषये लिखितम्—

आनन्दकानने ह्यस्मिस्तुलसी जङ्गमस्तरुः ।
कवितामञ्जरी यस्य रामभ्रमरभूषिता ॥

अस्य रचनेदृशी—

वर्णानामर्थसङ्घानां रसानां छन्दसामपि ।
मङ्गलानाञ्च कर्तारौ वन्दे वाणीविनायकौ ॥

नीलाम्बुजश्यामलकोमलाङ्गं सीतासमारोपितवामभागम् ।
पाणौ महाशायकचारुचापं, नमामि रामं रघुवंशनाथम् ॥

अतुलितबलधामं स्वर्णशैलाभदेहं दनुजवनकृशानुं ज्ञानिनामग्रगण्यम् ।
सकलगुणनिधानं वानराणामधीशं रघुपतिवरदूतं वातजातं नमामि ॥

## गदाधरभट्टाचार्यः

अस्य पिता जीवाचार्यः पावनामण्डलान्तर्गतलक्ष्मीचारड़ाग्रामवास्तव्यः । नवद्वीपे जगदीशतर्कालङ्कारस्य समीपे निवसता हरीरामतर्कवागीशस्यान्तिके च पठताऽनेन श्रूयते ६४ वादग्रन्था निर्मिताः । अयं खिस्तस्य १७ शतके आसीत् । एतद्रचितग्रन्थेषु केचनेमे सन्ति—

१ ब्रह्मनिर्णयः, २ मुक्तावलीटीका, ३ तत्त्वचिन्तामणिदीधितिः, ४ गादाधरी, ५ व्युत्पत्तिवादः, ६ शक्तिवादः, ७ न्यायकुसुमाञ्जलिटीका।

## जगदीशतर्कालंकारः

अयं ख्रिस्तस्य १७ सप्तदश्यां शताब्द्यां जातः। अस्य पिता यादवतर्कवागीशः। जगदीशो वंगस्य नवद्वीपग्रामवास्तव्यः आसीत्। अस्य गुरुर्न्यायशास्त्रे भावानन्दविद्यावागीशः। अयं न्यायशास्त्रस्य प्रकाण्डो विद्वान् आसीत्। अस्येमे ग्रन्थाः—

१ न्यायदीधित्याः टीका, २ अनुमानमयूखस्य भाष्यम् ३ पक्षता, ४ केवलान्वयी, ५ अन्वयव्यतिरेकी, ६ केवलव्यतिरेकी, ७ अवयवः, ८ तर्कचतुष्टयम् ९ सिद्धान्तलक्षणम्, १० व्याप्तिपञ्चकम्, ११ उपाधिवादः, १२ पूर्वपक्षः, १३ अनुमानदीधितितर्कः, १४ सिंहव्याघ्री, १५ अवच्छेदकनिरुक्तिः।

## कृष्णदैवज्ञः

असौ दक्षिणदेशीयो ब्राह्मणः, काशीवासिनो बल्लालस्य पुत्रः। १७ शतके ख्रिस्तस्य जातः। दिल्लीश्वरस्य जहांगीरस्य सभायामसौ पण्डितेषु प्रधान आसीत्। अधोऽङ्किता अस्य ग्रन्थाः—

१ भास्करीयबीजगणितटीका, २ नवाङ्कुरा, ३ श्रीपतिपद्धतिटीका, ४ छादक-निर्णयः।

## गोविन्दानन्दः

अनेन रत्नप्रभायां स्वगुरुसंबन्धे यः श्लोको लिखितः तस्मिन् लघुचन्द्रिकासमाप्तिगतस्यैकस्य श्लोकस्य छाया पतिता,

तयाऽनुमीयते यदयं ब्रह्मानन्दस्य सहपाठी शिवरामस्य शिष्यः। ब्रह्मानन्दो मधुसूदनसरस्वतीसमकालिकोऽतोऽयं खिस्तस्य सप्तदशशताब्द्यां भवितुमर्हति। अस्य शारीरकभाष्योपरि सुप्रसिद्धा रत्नप्रभा नाम्नी टीकाऽस्ति, यस्या विषयेऽयं वदति—

विस्तृतग्रन्थवीक्षायामलसं यस्यास्ति मानसम्।
व्याख्यां तदर्थमारब्धा भाष्ये रत्नप्रभाभिधा॥

## जगन्नाथसम्राट्

अयं जयपुराधीशस्य जयसिंहस्य सभ्यः। जयसिंहस्य कालः १६६१ खिस्ताब्दः सम्राजोऽपि स एव ज्ञेयः। अनेनारबीभाषाया मिजस्तीसिद्धान्तः संस्कृतभाषायामनूदितो यश्च सम्राट्सिद्धान्तनामा ग्रन्थो जातः। अस्मिन्ग्रन्थे जयपुर, दिल्ली, मथुरा, काशी, उज्जैनगतवेधशालास्थयन्त्राणां सविस्तरं विवरणं प्राप्यते अयमरब्यन्तर्गतस्यैकलैदसस्यानुवादं कृतवान योऽधुना संस्कृतप्रसिद्धो रेखागणितनामा ग्रन्थः। रेखागणितस्य निर्माणे जयसिंहेन ५ ग्रामा पुरस्कारेऽस्मै अर्पिताः, येऽद्यास्य सन्ततयाऽधिकृताः सन्ति।

## मधुसूदनसरस्वती

अयं मुगलसम्राट् शाहजहांकाले बभूव। अस्य विद्यागुरुः माधवसरस्वती दीक्षागुरुश्च विश्वेश्वरसरस्वती। विद्यागुरोर्विषयेऽद्वैतसिद्धेः समाप्तौ वदति।

श्रीमाधवसरस्वत्यो जयन्ति यमिनां वराः।
वयं येषां प्रसादेन शास्त्रार्थे परिनिष्ठिताः॥

श्रूयतेऽयं वङ्गदेशस्य फरीदपुर-प्रान्तान्तर्वर्तिकोटालिपाड़ाग्रामनिवासी। अनेन रामराजस्वामिकृतन्यायामृतस्य खण्डनं कृतम् यस्य खण्डनं रामराजस्वामिशिष्येण रामाचार्येण तरङ्गिण्यां विहितम्। येनासन्तुष्टेन ब्रह्मानन्दसरस्वातिना तरङ्गिण्याः खण्डनं लघुचन्द्रिकायां कृतम्। श्रूयते मधुसूदनसरस्वतीकृपया वीरसिंहराज्ञा पुत्रः प्राप्तः। अस्य ग्रन्थाः—

१ सिद्धान्तबिन्दुः, २ संक्षेपशारीरकव्याख्या, ३ अद्वैतसिद्धिः, ४ अद्वैतरत्नरक्षणम्, ५ वेदान्तकल्पलतिका ६ गूढार्थदीपिका, ७ प्रस्थानभेदः, ८ महिम्नस्तवटीका, ९ भक्तिरसायनम् १० आनन्दमन्दाकिनी च।

जनश्रुतिर्वर्तते यदनेन श्रीकृष्णसाक्षात्कारः कृतः। अस्य श्लोकदृशा—

ध्यानाभ्यासवशीकृतेन मनसा यन्निर्गुणं निष्क्रियं,
ज्योतिः किञ्चन योगिनो यदि परं पश्यन्ति पश्यन्तु ते।
अस्माकं तु तदेव लोचनचमत्काराय भूयाच्चिरं,
कालिन्दीपुलिनेषु यत्किमपि तन्नीलं महो धावति॥

वंशीविभूषितकरान्नवनीरदाभात् पीताम्बरादरुणबिम्बफलाधरोष्ठात्।
पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात् कृष्णात्परं किमपि तत्त्वमहं न जाने॥

प्रमाणतोऽपि निर्णीतं कृष्णमाहात्म्यमद्भुतम्।
न शक्नुवन्ति ये सोढुं ते मूढा निरयङ्गताः॥

यः पाशेन यशोदया नियमितो येनापराधं विना,
तस्मिन्नास्ति "वलित्रिधा" मयि पुरः सोऽयं बलिध्वंसिनः।
एवं चिन्तनतत्परः कृशतरस्त्वन्मध्यदेशो भृशं
यत्शोदय! सशोकमुद्गिरति ते रोमावलिव्याजतः॥

## धर्मराजाध्वरीन्द्रः

अयं खिस्तस्य सप्तदशशताब्द्यामुत्पन्नः। अनेन वेदधिकारकर्तुर्नृसिंहाश्रमस्य शिष्याद् वेङ्कटनाथात् शिक्षा दीक्षा च गृहीता। अस्य ग्रन्थद्वयं प्राप्यते वेदान्तपरिभाषा तथा गङ्गेशोपाध्यायकृततत्त्वचिन्तामणेष्टीका तर्कचूडामणिनाम्नी। अयं वेदान्तपरिभाषारम्भे परमगुरुमित्थं स्मरति—

यदन्तेवासिपञ्चास्यैर्निरस्ता भेदवारणाः।
तं प्रणौमि नृसिंहाख्यं यतीन्द्रं परमं गुरुम्॥

## रामतीर्थः

अयं खिस्तस्य सप्तदशशताब्द्यामुत्पन्नः। अनेन सदानन्दकृत—वेदान्तसारस्य विद्वन्मनोरञ्जिनी, संक्षेपशारीरकस्य अन्वयार्थप्रकाशिका, उपदेशसाहस्र्याः पदयोजनिका, तथा मैत्रायण्युपनिषट्टीका लिखिता।

## माधवोपाध्यायः

अयमायुर्वेदप्रकाशस्य प्रणेता सारस्वतब्राह्मणः। जन्मनाऽनेन सौराष्ट्रदेशोऽलंकृतः। कदाचिदनेन जन्मस्थलीं त्यक्त्वा काश्यां च निवासः कृतः। रसप्रकाशस्य द्वितीयेऽध्याये भावमिश्रस्य नामग्रहणात् भावमिश्रादर्वाचीनो भवति। स च खिस्तस्य १६०० वर्षेऽभवत् नूतमतोऽयं खिस्तस्य १७ सप्तदशशतके बभूव।

अस्य रचनेयम्—

अर्थप्रकाशकाशारविमर्शाम्बुजिनीमयम्।
सच्चिदानन्दविभवं शिवयोर्वपुराश्रये॥

देवेन्द्रमौलिमन्दारमकरन्दकणारुणाः ।
विघ्नं हरन्तु हेरम्बचरणाम्बुजरेणवः ॥

## वेंकटाध्वरिः

आसीदयं 'सुगृहीत' नामा रामानुजाचार्यमतानुयायी । अस्य पिता रघुनाथदीक्षितः पितामहश्चाप्पय्यगुरुः । ताताचार्योऽस्याप्पय्यगुरोर्मातुलः, यथा सुगृहीत एव विश्वगुणादर्शाभिधे स्वरचिते चम्पूग्रन्थे—

काञ्चीमण्डलमण्डनस्य मखिनः कर्णाटभूभृद्गुरोः ।
ताताचार्यस्य दिगन्तरान्तयशसो यं भागिनेयं विदुः ॥
अस्तोकाध्वरकर्तुरप्पयगुरोरस्यैष विद्वन्मणेः ।
पुत्रः श्रीरघुनाथदीक्षितकविः पूर्णो गुणैर्वर्तते ॥
तत्सुतस्तर्कवेदान्ततन्त्रव्याकृतिचातुरः ।
व्यक्तं विश्वगुणादर्शं विधत्ते वेङ्कटाध्वरिः ॥

अयमप्पय्यगुरुरप्पय्यदीक्षितादन्यः, यतोऽयं वैष्णवोऽप्पय्यदीक्षितस्तु शैवः । श्रूयते—ताताचार्यस्य मतमप्पय्यदीक्षितेन खण्डितम् । ततो बद्धवैरेणायमप्पय्यदीक्षित एकाकी क्वचिदरण्यमार्गेण गच्छन् ताताचार्यप्रेषितर्हन्तुं प्रवृत्तैः चाण्डालैरनुसृतः । तदा शिवस्य कृपया तान् कश्चित्पुरुषः पराजयामास ।

वेङ्कटाध्वरिर्वैष्णवः कविः । एतत्कृतम् एकरात्रौ एव निर्मितं लक्ष्मीसहस्रं, द्वितीयश्च विश्वगुणादर्शचम्पूश्चेति काव्यद्वयमुपलभ्यते । चम्पूकाव्ये कृशानु-विश्वावसुनामानौ गन्धर्वौ विमानेन भारतयात्रां कुर्वन्तौ तीर्थनदनदीनदीशपर्वतारण्यप्रान्तविभिन्नजातिविषयादीनामद्भुतं दोषगुणयोर्विचारं कुरुतः ।

अयं वेङ्कटाध्वरिः अप्पय्यदीक्षितस्य पौत्रस्य नील-कण्ठदीक्षितस्य समकालीनः अतो खिस्तस्य १७ शताब्द्यामासीदिति ज्ञायते । नीलकण्ठेन नीलकण्ठचम्पौ स्वग्रन्थसमय इत्थं विवृतः ।

अष्टत्रिंशदुपस्कृतसप्तशताधिकचतुःसहस्रेषु [४७३८] ।
कलिवर्षेषु गतेषु ग्रथितः किल नीलकण्ठविजयोऽयम् ॥

अर्थात् खिस्तस्य १६३७ तमे वर्षे विरचितो ग्रन्थः । विश्वगुणादर्शे अंग्रेजानां मद्रासे स्थितिस्तेषां दोषगुणविवेचनमप्यस्तीत्यतोऽपि वेङ्कटाध्वरेः समयः खिस्तस्य १७ शतक एवास्ति । अस्य रचना—

ध्यायामि राममभिराममिरामरन्दधारामदभ्रमितरामरैर्विरामम् ।
आराममद्भुततरामलसद्गुणानां, घोरामयघ्नमसुरामरवन्दिताङ्घ्रिम् ॥

सुशोभनकमलकरैः सेवितो जीवनार्थिभिः ।
मध्यस्थवाडवो राजत्याम्रदेशो नदीशवत् ॥

परमादिषु मातरादिमं यदिमं कोपकृताह मध्यमम् ।
अमरः किल पामरस्ततः स बभूव स्वयमेव मध्यमः ॥

सकर्पूरास्वादक्रमुकनवबीटीरसलस—
न्मुखाः सयश्लाघापदविविधदिव्याम्बरधराः ।
लसत्कस्तूरीकल्पा घुमघुमितगात्राश्च घुसृणै—
र्युवानो मोदन्ते युवतिभिरमीस्तुल्यरतिभिः ॥

## वरदराजः

अयं हि तैलङ्गब्राह्मणो, दक्षिणदेशादागत्य काश्यां स्वावासं कृतवान् । अयश्चासीत् भट्टोजिदीक्षितस्य शिष्यः ।

१७१८ विक्रमशताब्द्योमध्येऽस्य समयः । सिद्धान्तकौमुदीं च वैयाकरणानां दुर्गम्यामालोक्य तत्र प्रवेशाय ग्रन्थत्रयञ्चकार, तदिदं १ लघुकौमुदी–मध्यकौमुदी–सारकौमुदीति च ।

तार्किकरक्षायाः कर्ताऽन्यो वरदराजो विक्रमस्य ११, १२ शताब्द्योर्मध्ये, आसीत । सामवेदीयकल्पसूत्रव्याख्याता वरदराजः १४ शताब्द्यां जातः 'नैविवेक' ग्रन्थस्य व्याख्याता मीमांसकः 'वरदराजः' अन्यः एष ग्रन्थः ४०० वर्षादधिकपूर्वलिखितो विद्यते काशीराजकीयमहाविद्यालये । अस्य गुरोर्नाम सुदर्शनाचार्यः ।

## कोण्डभट्टः

महाराष्ट्रियब्राह्मणोऽयम् । अस्य निवासभूमिः काशी । समयं खिस्तस्य १७ शतके बभूव । वैयाकरणभूषणस्य टीकाऽनेन विरचिता, भट्टोजिदीक्षितकृतकारिकायाश्च, अतोऽवगम्यते यदयं भट्टोजितोऽर्वाचीनः । अपरेऽप्यस्य विंशतिः ग्रन्थाः ये कोण्डविंशतिनाम्ना प्रसिद्धाः । न्यायशास्त्रेऽप्यनेन पदार्थदीपिकाभिधो ग्रन्थो विरचितः ।

## कुन्दः

ज्ञानमनाघनश्यशुणाभिभूषितोऽयमकबरसम्मानितो जम्मपुराधीशमानसिंहपुत्रस्य भावसिंहस्य सभ्यः खिस्तस्य १७ शताब्द्यामासीत् । अस्य रचनेदृशी—

सम्प्रत्यस्य मधुव्रतैर्भ्रमस्ति बत रे कुन्द ! किं दुरभिमानमुरीकरोषि ।
इत्थं चेतसि करोषि सरोजबन्धुः, पुष्पान्धयोऽपि मयि सौरभमातनोति ॥
येनाकारि महीभृतामविरतं कण्ठेषु लीलायितम्,
येन प्राप्ति सरोजसुन्दरदृशां कुचस्तनाबिलम्बनम् ।

यातं येन गजेन्द्रगण्डयुगले साधारणं गुञ्जया,
मुक्तादाम तदेव पामरपुरे नावाप कां कां दशाम् ॥

## नागेशभट्ट

अयं महाराष्ट्रदेशीयो ब्राह्मणः काश्यां वसति स्म खिस्तस्य १७ शताब्द्याम् अस्य गुरुर्भानुदीक्षितपुत्रो हरिदीक्षितः। पिता शिवभट्टो माता च सती देवी पुराऽयं श्रूयते-षोडशवर्षावधि पठनं न कृतवान् पश्चाद् वागीश्वर्या आराधनेन जातोऽयं वद्ग्छिरोमणिः । अयं शृङ्गवेरपुराधीश्वरतो जीविकां लब्धवान् शृङ्गवेरपुरमधुना प्रयागमण्डले सिंगरौर-नाम्ना प्रसिद्धमस्ति अस्येमे ग्रन्थाः—

१ बृहल्लघुमञ्जूषा, २ लघुमञ्जूषा, ३ लघुशब्देन्दुशेखर, ४ परिभाषेन्दुशेखर ५ तीर्थेन्दुशेखर, ६ प्रायश्चित्तेन्दुशेखर, ७ आचारेन्दुशेखर, ८ वाल्मीकीयरामायणस्य रामाभिरामी टीका ९ रसमञ्जरीटीका, १० दुर्गासप्तशतीटीका, ११ काव्यप्रदीपस्योद्योतटीकादयः प्रसिद्धाः ।

## खुमानः

अयं जन्मान्धो मुसल्मानो बुन्देलखण्डगतचरखारीराज्ये १६८३ ईसाब्दे वसति स्म एकदा चरखारीराज्ये कश्चिन्महात्माऽऽगतः । खुमानस्तदन्तिके प्रतिदिनं गच्छति स्म । महात्मना पृष्टोऽयं सम्पूर्णां स्वदुःखकथां कथितवान् दयालुना तेन तस्य जिह्वायां सारस्वतं बीजं लिखितम् । खुमानस्तदानीमेव कविताशक्तिं सम्प्राप्य २५ श्लोकैर्महात्मनः कमण्डलुं वर्णयाञ्चकार । एकदाऽयं परिभ्रमन् ग्वालियरञ्जगाम । तत्रत्येन

राज्ञा कथितो रात्रावेव ७०० श्लोकानामेकं ग्रन्थं लिखितवान् । अनेन लक्ष्मणशतकस्य सदुत्कृष्टा रचना कृता ।

## व्यासरामाचार्यः

अयं व्यासराजस्य शिष्यः अस्य पिता विश्वनाथः उपमन्युगोत्रः गोदावरीतटवर्त्तिन्यामन्धपुर्यां वसति स्म । ज्येष्ठो भ्राता नारायणाचार्यः । अयमीशोः १७ शताब्द्यामुत्पन्नः । अयं व्यासराजकृतन्यायामृतखण्डनकर्तुर्मधुसूदनस्वामिनः समीपेऽद्वैतसिद्धेः खण्डनाय गुरुप्रेरितो गतवा तत्र शास्त्रार्थं जन्यमप्राप्य न्यायामृतटीकां तरङ्गिणीं लिखितवान् । यत्राद्वैतसिद्धेस्ते अंशाः खण्डिताः ये न्यायामृतखण्डका वर्तन्ते ।

## राघवेन्द्रस्वामी

अयं मध्वसिद्धान्तानुयायी । अस्य स्थितिः ख्रिस्तस्य सप्तदशशताब्द्यामासीत् अनेन कृता ग्रन्थाः—

१ तत्त्वोद्योतटीकावृत्तिः २ तत्वप्रकाशिकावृत्तिभावदीपः, ३ वादावलीटीका, ४ मन्त्रार्थमञ्जरी, ५ तत्त्वमञ्जरी, ६ गीताविवृतिः, ७ ईश, केन, प्रश्न, मुण्डक, छान्दोग्य, तैत्तिरीयोपनिषदां खण्डार्थश्चेति सन्ति ।

## आपदेवः

अयं सुप्रसिद्धमीमांसकः ख्रिस्तस्य सप्तदशशताब्द्यामुत्पन्नः । अनेन सदानन्दकृत—वेदान्तसारस्य बालबोधिनीनाम्नी टीका लिखिता अस्य मीमांसान्यायप्रकाशनामा प्रकरणग्रन्थः प्राप्यते । अयं बालबोधिन्यारम्भे वदति—

आपदेवेन वेदान्तसारतत्त्वस्य दीपिका ।
सिद्धान्तसम्प्रदायानुरोधेन क्रियते शुभा ॥

अथ रचनेदृशी—

यत्कृपालेशमात्रेण पुरुषार्थचतुष्टयम् ।
प्राप्यते तमहं वन्दे गोविन्दं भक्तवत्सलम् ॥
अनन्तगुणरत्नाढ्यमनन्तमनन्तप्रियम् ।
अनन्तरूपिणं वन्दे गुरुमानन्दरूपिणम् ॥
क्वाहं मन्दमतिः क्वेयं प्रक्रिया भाट्टसम्मता ।
तस्माद् भक्तिविलासोऽयं गोविन्दगुरुपादयोः ॥

## गोवर्द्धनमिश्रः

अयं ख्रिस्तस्य षोडशशतके मिथिलादेशे बभूव । अस्य पिता बलभद्रः, माता विजयश्रीस्तथा सोदरावग्रजौ विश्वनाथः पद्मनाभश्च । केशवमिश्रस्तथा पद्मनाभोऽस्य गुरुः । केशवमिश्रकृततर्कभाषाग्रन्थस्य तर्कभाषाप्रकाशाभिधायां टीकायामयं स्वपरिचयमित्थं ददाति—

"विजयश्रीतनुजन्मा गोवर्द्धन इति श्रुतः ।
तर्कभाषां नु तनुते विविच्य गुरुनिर्मितिम् ॥
श्रीविश्वनाथनुजपद्मनाभानुजो गरीयान् बलभद्रजन्मा ।
तनोति तर्कानधिगम्य सर्वान्, श्रीपद्मनाभाद्विदुषो विनोदम् ॥"

अस्य कृतिः तर्कभाषाटीका तर्कभाषाप्रकाशस्तथा तर्कसंग्रहटीका न्यायबोधिनी प्राप्यते । अस्य रचनेदृशी—

कण्ठावलम्बिनी गाः पूर्णो गोवर्द्धनस्तमभ्यर्चेत ।
विपुलाभीरसभाजनजनितसुरेन्द्रस्तवाभिरचनाभिः ॥

## क्षेमशर्मा

अनेन १६०५ विक्रमाब्दे क्षेमकुतूहलाख्यवैद्यकग्रन्थो विरचितः । यथा तत्रैव ग्रन्थान्ते—

"बाणाकाशश्रुते नादे (१६०५) वत्सरे विप्रमांङ्किते ।
ऊर्जे शुक्लत्रयोदश्यां ग्रन्थः पूर्णोऽयमैन्दवे ॥"

अस्य पिता मन्मथः जननी च सीता गुरुः पितृव्यश्च सूर्यदासः । भारद्वाजगोत्रियब्राह्मणोऽयम् । अयं कविवरो वैद्यश्चासीद् । अस्य रचना—

यत्रागस्त्यहरिद्वयद्रुतपवनव्याधूतचूतव्रजा-
दामोदारपरागपुञ्जपिहितं व्योमापि संराजते ।
छिन्नं रेणुचयैरिव स्मरविभोर्यत्रोद्गतैरिच्छतो,
वेधुं सर्वजगन्ति स स्मरसखो ज्ञेयो वसन्तोदयः ॥

श्यामां प्रसन्नशशिविम्बमुखीं विनिद्रपङ्केरुहाकृतिदृशं धृतचारुवेषाम् ।
आलिङ्ग्य मारुतचयं परिचुम्ब्य पित्तं भुक्त्वा जयेत्कफचयं स्मरमित्रकाले ॥

पद्मनाभः

अयं बलभद्रमिश्रस्य पुत्रो मैथिलः । बलभद्रमिश्रः प्रगल्भभट्टाचार्यस्य शिष्य इति पद्मनाभः प्रशस्तपादभाष्यसेतौ वदति—

"भद्र यदत्र विभिःक्षिप्तं नव्यं सिद्धान्तवर्तिना ।
पद्मनाभेन तैः प्रीतः प्रगल्भो स्तु गुरोर्गुरुः ॥"

पद्मनाभेन बलभद्रमिश्रादेव शास्त्रमधिजगे । भद्रूक्यते सेतौ किरणावलीभास्करे च पद्मनाभेन—

स्मृतिरथनुपनीय श्रीमतस्तातवक्त्रादुचितमुपचितार्थं वाक्यमत्यादरेण ।
भवति विरचितोऽसौ पद्मनाभेन यत्नादुदयनकृतपारप्राप्तये सेतुरुच्चैः ॥"

बलभद्रमुखाम्भोजमदनादुदयाचलात् ।
उदितो भास्करस्तस्मादादरेण निषेव्यताम् ॥

पद्मनाभ ओड़छाधिपते रामचन्द्रपुत्रस्य वीरभद्रस्य सभायामासीत्। वीरभद्रेण वात्स्यायनकृतकामसूत्रस्य कन्दर्पचूडामणिनाम्नी टीका रचिता १६३३ विक्रमाब्दे वा १५७६ ख्रिस्ताब्दे, यथा तत्रैव।

'हरलोचनहरलोचनरसशशिभिर्विश्रुते समये।
फाल्गुनशुक्लप्रतिपदि पूर्णो ग्रन्थः स्मरस्मेरः॥"

अयमेव कालः पद्मनाभस्यापि। अयं सेतौ वदति।

बलवशीकृतदुर्दमभूपतिर्निजभुजार्जितलोकसमुन्नतिः।
अगतिकार्थिजनस्य परागतिर्जयति वीरवरः पृथिवीपतिः॥

अस्येमे ग्रन्थाः--

१ प्रशस्तपादभाष्यसेतु, २ किरणावलीभास्करः, ३ राद्धान्तमुक्ताहारस्तस्य टीका, ४ कणादरहस्यञ्च।

जीवगोस्वामी

रूपगोस्वामिसनातनगोस्वामिनावस्य पितृव्यौ स्तः। अयं ख्रिस्तस्य १७ शताब्द्याः पूर्वे भागे जातः। अनेन वृन्दावने राधादामोदरमन्दिरस्य प्रतिष्ठा कृता। अस्य प्रशंसा ख्रिस्तस्य सप्तदशशताब्द्यामुत्पन्नेन श्रीकृष्णदासेन स्वकीये चरितामृते परमा कृता। एकदिनेऽयं यमुनायां स्नानं कृत्वा गृहमागमित्पुः केनचिज्जनेन पृष्टो यत् संध्यानुष्ठानं कथन्न कृतम्? तदा जीवगोस्वामिना श्लोकाभ्यामुत्तरं दत्तम् —

हृदाकाशे चिदानन्दं सुदा भाति निरन्तरम्।
उदयास्तं न पश्यामः कथं संध्यामुपास्महे॥
सद्भक्तिदुहिता जाता मायाभार्या मृताऽधुना।
अशौचद्वयमाप्नोति कथं संध्यामुपास्महे॥

अनेन रूपगोस्वामिकृत--भक्तिरसामृतसिन्धोष्टीका, क्रमसन्दर्भनाम्नी श्रीमद्भागवतटीका, षट्सन्दर्भः, भक्तिसिद्धान्तः, गोपालचम्पूः, उपदेशामृतञ्चेति, ग्रन्थषट्कं लिखितम् ।

## सनातनगोस्वामी

अयं जीवगोस्वामिनो भ्राता । अयं परमविरागी प्रसिद्धः । अस्य वयसोऽन्तिमो भागो वृन्दावने व्यतीतः । अस्य ग्रन्थपञ्चकं विद्यते —गीतावली, वैष्णवतोषिणी, सिद्धान्तसारः, हरिभक्तिविलासः वङ्गभाषायाम्, रसमयकलिका च ।

## आनन्दरायमखी

अनेन नाटकद्वयं प्रणीतं जीवानन्दनम् तथा विद्यापरिणयनन्नाम । अयं तञ्जौरनगरमहीपतेः श्रीशाहिराजस्य मन्त्रिप्रवर इति ताभ्यामेव नाटकाभ्यां ज्ञायते शाहिराजः र्दोन्सपालवंशतिलकः शरभापरपर्यायः । खिस्ताब्दीयसप्तदशशतकपूर्वार्द्धोऽस्य समयः । अस्य कवेरप्ययमेव कालो ज्ञातव्यः । अस्य पिता नृसिंहरायाध्वरिः । अनेन प्रायो वेदान्तपरा रचना कृता । सा चेदृशी —

मन्त्रिन् ! जन्मैव दोषः प्रथममथ तदप्याधिभिर्व्याधिभिश्चे--
त्तुल्यं कष्टं बतातः किमधिकमपि तु त्वन्मतेर्वैभवेन ।
देव्या भक्त्याः प्रसादात् परमशिवमहं वीक्ष्य कृच्छ्राणि तीर्णः,
सर्वाणि द्राक्तदत्यद्भुतमिहशुभदं संविधानं तवेदम् ॥

उद्यानानि महावनानि गिरयः प्रासादसौधादयः,
प्राकारस्तु सचक्रवालशिखरी खेयं तु सप्तार्णवी ।
आराम्स्तोरणगोपुराणि दश तास्तेजस्त्रयीदीपिका,
यस्याः शिल्पमियं पुरी वसुमती सा केन वै वर्ण्यताम् ॥

अन्यच्च—

संसारार्णतकर्णधारसकलक्लेशान्धकारच्छटा--
चण्डांशो ! सकलेप्सितार्थघटनासन्तानचिन्तामणे !
सत्यज्ञाननिधे ! सकृत्प्रणमते सायुज्यलक्ष्मीप्रद !
स्वामिन् ! दैवतसार्वभौम ! दयया मां पाहि साम्ब ! प्रभो !

## अब्रह्मंगाजरः

अयं डचदेशे १६६५ ख्रिस्ताब्दे बभूव । अयं मद्रप्रान्त आगत्य संस्कृतभाषामधीत्य च भारतीयसंस्कृतग्रन्थानामाधारे "ओपेन डोरटु हैडेन हेथेन्डम" नामकं धर्मार्थकाममोक्षप्रतिपादकं धर्मग्रन्थं रचितवान् ।

## बर्नियरः

अयं फ्रांसदेशे १६७१ ख्रिस्ताब्दे बभूव । अयं संस्कृतभाषां सम्यगधीत्य भारतीयभूगोलधर्मन्यायशास्त्राणामुपरि बहून् ग्रन्थान् रचितवान् । अस्याधुनाऽपि पाश्चात्यसंस्कृतज्ञेषु परमा प्रतिष्ठा वर्तते ।

## भीमसेनदीक्षितः

अयं कान्यकुब्जः ब्राह्मणः अनेन काव्यप्रकाशस्य सुधासागरनाम्नी टीका लिखिता । काव्यप्रकाशस्य दशमोल्लासटीकायामुपमालङ्कारव्याख्यावलोकनात् प्रतीयते यदयं कुवलयानन्दखण्डनालङ्काररसोद्धारयोरपि लेखकः । टीकारम्भेऽनेनेत्थं स्वपरिचयो दत्तः—

श्रीमान् शाण्डिल्यवंशो कृतविविधमखः, कीर्तिमान् दीक्षितोऽभूत् ।
गंगादासो गुणाढ्यः सुरगुरुसदृशः, कान्यकुब्जाग्रगण्यः ॥

तस्माद् वीरेश्वराख्यस्तनय इह महाभाग्यवान् विष्णुभक्तः,
जातः सङ्कीर्तनीयः पुरगुरुसदृशो, भूपतीनां सभासु ॥
तस्माच्छ्रीमुरलीधरो हि कविता पाण्डित्यपुण्याम्बुधिः ।
जातौ तस्य सुतौ त्रिलोचनशिवानन्दौ गुणैस्तत्समौ ॥
शैवे वा पथि वैष्णवे समरसश्रीसच्छिवानन्दजः ।
संजातः किल भीमसेन इति सद्विद्याविनोदी कविः ।

अनेन १७७९ विक्रमाब्दे सुधासागरः समाप्तिं नीतो यथा तस्यान्ते—

संवद्ग्रहाश्वमुनिभूज्ञाते मासे महोत्तमे ।
माघे सुदि त्रयोदश्यां समाप्तोऽयं सुधोदधिः ॥

भीमसेनो मम्मटभट्टस्य परमो भक्तः । अयं तं सरस्वत्यवतारं वदति, यथा—

शब्दब्रह्मसनातनं न विदितं, शास्त्रैः क्वचित् केनचित् ।
तद् देवी हि सरस्वती स्वयमभूत् काश्मीरदेशे पुमान् ॥
श्रीमज्जय्यटगेहिनीसुजठराज्जन्माऽप्ययुग्मानुजः ।
श्रीमन्मम्मटसंज्ञया श्रिततनुं, सारस्वतं सूचयन् ॥

अस्य रचनेदृशी—

नो किञ्चित् पठितं स्मरामि, न च मे शक्तिः पुनस्तादृशी ।
नो वा कोऽपि सहायतामुपगतो, नास्त्यपि विञ्चिद् बलम् ॥
सङ्गी चौरशिरोमणेः प्रतिदिनं गृह्णाम्यनर्घ्यान् गुणान् ।
सर्वस्यापि परन्तु मां क्षिपति यस्तस्याऽस्तु नावी गतिः ॥

## नारायणयतिः

अयं १५५८ विक्रमाब्दे काश्यामासीत् । अयं वासुदेवस्य शिष्यस्तथा रामगोविन्दतीर्थस्य । अनेन वेदान्ते सिद्धा-

न्तविन्दुव्याख्या, योगे योगचन्द्रिका, न्याये कुसुमाञ्जलिटीका तथा सिद्धान्तमुक्तावल्याश्चन्द्रिका टीका, सांख्ये च सांख्यकारिकावृत्तिचन्द्रिका टीका लिखिता।

यद्यप्ययस्यो पौनरुक्त्यभिया न मुक्तावल्या मङ्गलवादं जग्राह तथापि यत्र तत्र व्याख्यानावसरे स्वपाण्डित्यं प्रकटयाञ्चकार तेनास्य महद् वैदुष्यं प्रकटितम्भवति। आत्मनिरूपणप्रकरणे शरीरादेरात्मत्वनिरासावसरे क्रमप्राप्तं प्राणात्मवादखण्डनं निरूपयताऽनेन मुक्तावलीरचयितुर्विश्वनाथस्योपरि यः कटाक्षनिक्षेपोऽकारि स सहृदयस्य विदुष आश्चर्यजनक एव। नञः शब्दार्थः, नूतनेश्वरादिविशेषणसार्थक्यञ्च शिष्यजिज्ञासाविषये विश्वनाथेन परिहृतमपि कौशलेन निबद्धम्।

## बालकृष्ण

अयं दीक्षितावटङ्कोऽवदीच्यब्राह्मणो मारवाड़शासकस्याजितसिंहस्य सभायां ख्रिस्तस्याष्टादशशतकारम्भ आसीत्। अनेन २० सर्गात्मकम् अजितसिंहचरिताभिधमलौकिकं काव्यमजीतसिंहाज्ञप्तेन यथा—

> आज्ञा कृता तेन नराधिपेन, राठौड़वंशाभरणोत्तमेन।
> औदीच्यजं दीक्षितबालकृष्णं, शर्म्माणमेनं विबुधैकभक्तम्॥
> तथा प्रस्थितं सैन्यमेतत् सुराज्ञो, यथा मेघमाला घना भाद्रमासे।
> मरीश्चण्डवातेरिता रेणुसङ्घाः, समुद्रस्य सिन्धोर्यथोच्चारतरङ्गाः॥

## श्रीनिवासदीक्षितः

अयं श्रीनिवासताताचार्यस्य पुत्रस्तथाऽन्नयाऽऽचार्यस्य पौत्रः ख्रिस्तस्याष्टादशशतके बभूव। अनेन विरोधवरूथिनीप्रमाथिनी लिखिता।

## जगज्जीवनः

अयं ख्रिस्तस्य १८ शतकान्ते मारवाड़शासकस्याजीतसिंहस्य सभायामासीत। अनेनाजितोदयकाव्यमलेखि। अयमस्य द्वाविंशतितमसर्गान्ते यदात 'इति श्रीमदजितोदयकाव्ये भट्टजगज्जीवनकृतेऽभयनृपोद्वाहो नाम द्वात्रिंशत्तमः सर्गः" काव्येऽस्मिन्नजितसिंहस्य सर्वं चरित्रमलेखि. किन्त्वभयसिंहस्य विवाहपर्यन्तमेवातों वक्तुं शक्यते यदयं द्वयोर्नृपयोः समय आसीत। अस्य रचनेदृशी—

राज्ञोऽनेकगुणार्णवस्य सकलक्षोणीशचूडामणेः,
राठोडान्वयजाम्बुजव्रजवनप्रोल्लासकाहर्मणे।
वक्ष्ये चित्रमथाजितस्य नृपतेः प्रीत्या चरित्रं शुभं,
यद्यस्मिन् प्रतिबद्धवागपि मुदा वाग्देवताप्रेरितः॥

जाते तु पुण्यसमयेऽथ चतुर्दशेऽह्नि, श्रीयादवेन्द्रतनया नृपतेर्मनस्तः।
गर्भं दधौ त्वमितधामचयावभासं, प्राचीव षोडशकलं तु शरच्छशाङ्कम्॥

## पुरुषोत्तमः

अयं वल्लभमतावलम्बी आचार्यविट्ठलनाथदीक्षितपौत्रस्य बालकृष्णस्य चतुर्थपीठिकायामुत्पन्नः। अस्य पिता पीताम्बरः, पितामहो यदुपतिः, प्रपितामहश्च बालकृष्णपुत्रो व्रजराजः। अयं ख्रिस्तस्याष्टदशशताब्द्यामुत्पन्नः। अस्य ग्रन्थत्रयं विद्यते। अणुभाष्यटीकाभाष्यप्रकाशः, विट्ठलनाथकृतविद्वन्मण्डनस्य टीका सुवर्णसूत्रम्, तथा प्रस्थानरत्नाकरः।

## नीलाम्बरः

अयं मैथिलो ब्राह्मणः शालिवाहनस्य १७४५ तमे वर्षेऽजायत। शम्भुनाथोऽस्य जनयिता। पटनावास्तव्यः अस्य

विद्यागुरुः लज्जाशंकरो ज्यौतिषी । नीलाम्बरोऽलवरनरेशसभायां पण्डिताग्रगण्य आसीत् । अलवरराज्यस्य 'पोलीटिकेल-एजेन्ट कप्तान टामस कैंडल' साहबस्य कथनाद् वैदेशिकरीतिमनुसृत्य गोलप्रकाशनामको ग्रन्थोऽनेन प्रणीतो लीलावत्याष्टीकाऽपि । शालिवाहनस्य १८०५ तमे वर्षे काश्यां मणिकर्णिकातटेऽस्य देहावसानमजनि । ज्येष्ठोऽस्य भ्राता जीवनाथ आसीत् ।

## कृष्णानन्दः

अयं १७०४ शकाब्द आसीत् । अनेन सुदर्शनचम्पूनामकं काव्यमलेखि अस्य रचनेदृशी—

कवित्वशक्तिर्मधुरा च वाणी भाषा सुगीर्वाणवचोमयी च
यस्यास्ति भूमौ स धनी, कुलीनः, स पण्डितः सर्वगुणानुपेतः ॥

## माधवः

अयमोड़छाधिपतेरुद्योतसिंहस्य सभाकविः । उद्योतसिंहस्य राज्यकालः १७४६ विक्रमाब्दोऽतोऽस्य कवेरप्ययमेव समयः । अनेन माधवकाव्यसंग्रहः श्रूयते लिखितो यश्चानुपलब्धः किन्तूद्योतचन्द्रोदयाभिधं काव्यं तस्मादुद्धृतं प्राप्यते । अस्य रचनेदृशी—

दिल्लीनाथनिदेशतस्त्वयि विभो ! याते दिशं दक्षिणा-
मेषो जेष्यति मां विभीषण इति प्रागेव कम्पं दधौ ।
रामस्य स्वकुलाभयप्रदमथो सत्ताम्रपत्रं स्मरन्,
भास्वद्वंशभवादतीव रुदतो निश्चिन्तचित्तोऽभवद् ॥
चन्द्रं निर्माय वेधाः प्रथममनुचितं यत् कलङ्कैरुपेतम्,
लोके वाच्यो बभूव स्थगित इव पुनर्व्योम्नि सोमं निधाय ।

सोऽयं सर्वार्थविज्ञो जगति जनहितः सावधानः स यत्ना-
दुद्योतेन्दुं महीन्द्राद्‌भुतममितबलं निष्कलङ्कश्चकार ॥

## विश्वेश्वरः

अयमल्मोड़ाप्रान्ते ख्रिस्तस्याष्टादशशतके बभूव । अस्य पिता लक्ष्मीधरः । अधुनाऽस्य वंशजा अनूपशहरे सन्तीति श्रूयते । अस्य ग्रन्था इमे —

१ अलङ्कारकौस्तुभः सटीकः, २ अलङ्कारमुक्तावली, ३ आर्यासप्तसती सटीका, ४ कवीन्द्रकर्णाभरणम् सटीकम्, ५ काव्यतिलकम्, ६ काव्यरत्नम्, ७ तर्ककुतूहलम्, ८ दीधितिप्रवेशः ९ नवमालिका नाटिका, १० नैषधकाव्यटीका, ११ रोमन्दारमञ्जरी, १२ रसचन्द्रिका, १३ रसमञ्जरीटीका, १४ रोमावलीशतकम्, १५ लक्ष्मीविलासः, १६ वक्षोजशतकम्, १७ शृङ्गारमञ्जरीसट्टकम्, १८ षड्‌ऋतुवर्णनम्, १९ सिद्धान्तसुधानिधिः, २० होलिकाशतकम् ।

अस्य रचनेदृशी —

आकुलयति कुचमुकुलं, चुम्बति बिम्बाधरं दृशौ स्पृशति ।
स्थिततमः किमधिगतो, नहि सहचरि ! विभ्रमन् भ्रमरः ॥

मुक्तात्मकर्मातिस्वच्छं तारनायकभूषितम् ।
हारं धन्यः प्रपश्यन्ति कान्ताहृदयसङ्गतम् ॥

नाभीदरीज्वलदनङ्गकृशानुमध्ये,
यूनां मनांसि सरसानतमितानि पेतुः ।
तद्दाहतः समुदिता प्रतिभाति रोम-
राजीमिषेण वरवर्णिनि ! धूमलेखा ॥

## गुमानीकविः

लोकरत्नपन्तापरनामाऽय १८४७ खिस्ताब्दे कुमाऊँप्रदेशे जातः। अस्य पिता निधिर्माता च देवमञ्जरी। अस्योक्तयः काव्यमालायां मुद्रिताः सन्ति। उपदेशतकमप्यस्य प्राप्यते अनेन १९०२ खिस्ताब्दे शरीरं त्यक्तम्।

अस्य रचनेदृशी—

गर्वाद् योद्धुमुपेतः पौलस्त्यः सपदि कार्तवीर्येण।
क्रीडामृग इव बद्धो न बलोद्रिक्तेन योद्धव्यम् ॥
शिशुपालः क्रतुकाले हरिमर्हं गर्हयन्नहो त्यक्ता।
तदगुणमिता नाशं न महान्तं क्वापि गर्हेत ॥

## शुक्लेश्वरः

अयं भरद्वाजगोत्रः कान्यकुब्जब्राह्मणो हमीरपुरनिवासी १८७० विक्रमाब्दे बभूव। अनेन प्रबोधोदयनामकं नाटकमलेखि। यस्याभिनयः खीचीश्वरस्य सभायां जातः। अत्र सर्वशास्त्रज्ञाः स्वमतं प्रकटीकुर्वन्ति, तेनास्य प्रकृष्टं पाण्डित्यं प्रकटितं भवति।

## गदाधरः

अयं रायबरेलीप्रान्तस्य हसनपुरनामके ग्रामे बभूव १८७८ विक्रमाब्दे। अयं कान्यकुब्जब्राह्मण शुक्ल आसीत्। अयं हिन्दीभाषायाः कविः। संस्कृतेऽस्य "भोजनमाला" नामकः संस्कृतग्रन्थः प्राप्यते। अस्य रचनेदृशी—

हिंग्वैलानवनीततीक्ष्णमरिचत्वङ्माखपिष्टोद्भवा,
स्नेहे निर्जलशोधिते कटुतरे पक्वा समा सारुणा।

तक्रे रासभजीरकैः कलुषिते सञ्जोत्थितः कर्दमन् ,
दुग्धाब्धौ घटकास्तत्रैव भगवान् जासुकवान् भूधरान्

## राबर्टः

अयं राबर्ट डी नोबिलीनाम्ना ख्यात ईसाइधर्माचलम्बी १६०६ विक्रमाब्दे मद्रासमाजगाम । तत्रानेनेसुर्वेदनामकोऽपरः स्वलिखितो वेदस्तथा क्रिश्चियनपुराणनामको ग्रन्थः प्रकाशितः । एतद्ग्रन्थद्वयमस्यावलोक्य मद्रासे इसुर्वेदिनोऽनेके भारतीया अभूवन् । एतस्येसुर्वेदस्य प्रणायश्चलितो यस्मिन् कार्मीलिननामा दीक्षितोऽभूत् । स्वनाम्नाऽन्यापरं सम्प्रदायं चालयामास ।

## गणपतिः

अनेन गुर्जरदेशे जन्म लब्धम् , अस्य मुहूर्तगणपतिनामा ग्रन्थः प्राप्यते । ग्रन्थोऽयं १७४२ विक्रमाब्दे वसन्तपञ्चम्यां समाप्तः । अयं चीनेशमान्यस्य गौड़नृपतेर्लक्ष्मीरामस्य तोषाय मुहूर्तगणपतिं रचितवान् । अस्य रचनेदृशी —

श्रीमत्या कल्पवल्ल्येव हैमवत्या निरत्ययः ।
जयत्यालिङ्गितः कल्पद्रुमः सत्फलदः शिवः ॥
प्रस्तौति सालोकं लोकं यज्ञादिकर्मसु ।
यन्मुहूर्ताकरोद्यानं वन्देऽर्कं कालसोध्वरम् ॥

## रामचरणः

अयं वाराबङ्कीप्रान्तगतगणेशपुरे स्थितस्य १८ शताब्द्यामुत्पन्नः कायस्थ जातः । अनेन संस्कृतभाषायां कायस्थकुलभास्करनामा ग्रन्थो विरचितः ।

## बलदेवाचार्यः

अयमेकाचार्यबलदेवविद्याभूषणनाम्ना प्रसिद्धः। अयं ख्रिस्तस्याष्टादशशताब्द्यामुत्पन्नः। अस्य गुरुः राधादामोदरः। अयं वृन्दावने विश्वनाथचक्रवर्ति-पीताम्बरदासयोः समीपे विद्याध्ययनञ्चकार। अयमेकदा शास्त्रार्थे प्रतिद्वन्द्विना पृष्टो यत् भवता यन्मतं प्रतिपाद्यते तत् केन वेदान्तसूत्राणां सम्प्रदायेनानुमोद्यते? इत्याकर्ण्य मासाभ्यन्तर एव गोविन्ददेवस्य स्वप्नादेशानुसारि गोविन्दभाष्यं विरचितमनेन वेदान्तसूत्राणामुपरि। अस्यान्येऽपि सिद्धान्तरत्नं किंवा भाष्यपीठकम्, प्रमेयरत्नावली, वेदान्तस्यमन्तकः, गीताभाष्यम्, दशोपनिषद्भाष्यम्, विष्णुसहस्रनामभाष्यम्, स्तवावलीतिनामकाः प्रसिद्धा ग्रन्थाः सन्ति। इमे सर्वे एकाचिन्त्यभेदाभेदवादमनुसरन्ति।

## श्रीनिवासतीर्थः

अयं स्वतन्त्रतारतन्त्रवादी ख्रिस्तस्य १८ शताब्दां बभूव। अनेन वेदेशतीर्थस्य प्रणामः कृतः स्वग्रन्थेषु किन्तु गुरुर्यादवाचार्यः कथितः। अस्य ग्रन्था —

१ न्यायामृतप्रकाशः, २ तत्त्वोद्योतटीकाविवृत्तिः ३ कृष्णामृतमहार्णवटीका, ४ तैत्तरीय—माण्डूक्योपनिषद्विवृत्तिश्च सन्ति।

## वेदेशतीर्थः

अयं ख्रिस्तस्याष्टादशशताब्द्यामुत्पन्नः। अस्य ग्रन्थाः १ पदार्थकौमुदी २ तत्त्वोद्योतटीकाविवृत्तिः, ३ कठोपनिषद्विवृत्तिः, ४ केनोपनिषद्विवृत्तिः, ५ छान्दोग्योपनिषद्विवृत्तिश्च।

## विश्वनाथाचार्यः

अयमेव विश्वनाथचक्रवर्ती । अयं ख्रिस्तग्याष्टादशशताब्द्यामुत्पन्नः । अयं निम्बार्कसम्प्रदायानुयायी । अस्य श्रीमद्भागवतस्य तथा श्रीमद्भगवद्गीतायाष्टीका प्राप्यते ।

## गुमानमिश्रः

हरदोईमण्डलस्य सौगीग्रामेऽयं १७४० ईसाब्द आसीत कान्यकुब्जब्राह्मणः । पुराऽयं दिल्ल्यां मोहम्मदशाहस्य सभ्योऽभूत्पुनश्च अली अकबरखां मोहम्मदीनामालङ्कृतवान् । अनेन संस्कृते कलानिधिनामा ग्रन्थो व्यरचि । यत्र नैषधकाव्यस्य प्रतिश्लोकान्त्यचरणानां पूर्तिस्त्रिभिः पद्यैः कृता । नैषधस्य द्वादशसर्गगत-पञ्चनल्या उपरि सलिलनाम्नी टीकाऽलिखिता ।

## शिवरामत्रिपाठी

अयं त्रिलोकचन्द्रात्मजः ख्रिस्तग्याष्टादशशताब्द्यां जातः । अनेन नक्षत्रमालाटीकायां नागेशभट्टकृत-परिभाषेन्दुशेखरः स्मृतोऽतोऽस्मादर्वाचीनः । नक्षत्रमालाटीकायां वदत्ययम्—

काव्यानि पञ्च तनुतेऽपि च पञ्चसंख्या--<br>
ष्टीकास्तु सप्तदश चैक उणादिकोषः ।<br>
भूपालभूषणमथो रसरत्नहारो,<br>
विद्याविलास इत्यपूर्वशरत्फलाद्या ॥

साम्प्रतमप्येमे ग्रन्था: प्राप्यन्ते, सटीकौ नक्षत्रमालारसरत्नहारौ, कादम्बरी, दशकुमारचरित, वासवदत्तानाञ्च टीकाः । अस्य रचनेदृशी—

गोत्रस्खलने भ्रान्ति मानिनि ! जानीहि केवलं सेऽत्र ।
व्याख्यानतो विशेषप्रतिपत्तिः पाणिनीय इव ॥
यदागमास्तद्गुणास्ते गृह्यन्ते ग्रहाश्रिते ।
अतस्त्वरयावद्भावो मामैच्छत सुसादरम् ॥

## महादेवसरस्वती

अयं स्वयंप्रकाशानन्दस्य शिष्यः खिस्तस्याष्टादशशताब्द्यां बभूव । तत्रानुसन्धानस्यायं लेखकस्तथा टीकाकारः ।

## सदाशिवेन्द्रसरस्वती

अयं खिस्तस्याष्टादशशताब्द्यां दक्षिणभारतस्य करूर नामके स्थाने बभूव । अनेन तञ्जौरप्रान्तस्य तिरुविसानल्लूर-नामके स्थानेऽधीतम् । अस्य स्त्री यदा रजोधर्ममाप तदा माता ब्राह्मणान् बानामन्त्रयाञ्चकार ते समये नाऽगता अतः सदाशिवो विचारयामास यद्विवाहो विपदां मूलमेव । विवाहित-जीवनस्यारम्भ एव यदा मुमुक्षावरोधो दृश्यते तदाऽग्रे किं भविष्यतीति न जाने । इत्थं विचार्य गृहं त्यक्त्वा परमशिवेन्द्रस्वामिनः सकाशात् दीक्षां जग्राह । अयं परमस्तार्किको विद्वानासीत् । अयमेकदा गुरुणोक्तो यत् त्वदीया जिह्वा कदाऽवरुद्धा भविष्यति । गुरोर्वचनमिदमाकर्ण्य मौनो बभूव । श्रूयतेऽनेन स्वर्गपर्यन्तं यात्रा कृता । अस्य समाधिर्वर्तते नेरूरसमीपे । अस्य ग्रन्थेषु ब्रह्मसूत्रस्य ब्रह्मतत्त्वप्रकाशिकानाम्नी, योगसूत्रस्य योगसुधाकरनाम्नी सूत्रवृत्तिस्तथा आत्मविद्याविलासः, कविताकल्पवल्ली, अद्वैतराजमञ्जरीति प्रसिद्धाः ।

## आयन्नदीक्षितः

अयं वेङ्कटेशसदाशिवेन्द्रसरस्वतीशिष्यः ख्रिस्तस्याष्टादशशताब्द्यां बभूव। अस्य व्यासतात्पर्यनिर्णय, अक्षरषष्टि, दायशतकनामकं ग्रन्थत्रयं विद्यते।

## माणकू:

'भारतीयचित्रकला' लेखकः श्रीनानालालचमनलालमेहतामहाशयो वदति यन्माणकूश्चित्रकर्त्री टेहरीराज्याधिपतेः सुदर्शनशाहस्य समये आसीत्। अयं समयः १८८७ विक्रमाब्द इति। लाहोरम्यूजियमे गीतगोविन्दसम्बन्धीनि यानि चित्राणि लभ्यन्ते, तानि टेहरीनिवासिन्या माणकूनाम्न्या महिलया कृतानि। इयं चित्रकर्त्री कवयित्र्यप्यासीत्। एकस्य चित्रस्याधोभागे इयं लिखति—

मुनिगिरिवसुसोमैः सम्मिते विक्रमाब्दे
गुणगणितगरिष्ठा मालिनीवृत्तवित्ता।
व्यरचयदज्रभक्ता माणकूचित्रकर्त्री,
ललितलिपिविचित्रं गीतगोविन्दचित्रम्॥

## वीरबलधरः

काश्मीरिकोऽयं विद्वान् १८१६ ख्रिस्ताब्दे अभूत्। एतस्मिन् समये काश्मीरं शास्ति स्म अफगानिस्तानस्यामीरः। एतस्य सर—सूबापदे नियुक्त आसीत् अजीमखांमुसल्मानः, यस्य पेशकारपदे कार्यं करोति स्म संस्कृतफारस्योर्विद्वान् वीरबलधरः। अयमात्मधर्मस्यासीत्पक्षपातीति सूबासाहबस्य नेत्रयोः कण्टकायते स्म। तेन सह जाते विरोधे किं करणीयं भयेति

विचिन्त्य भारतीयराजनीतिशास्त्रं सम्यगधीत्य एकस्मिन् दिने तस्मै राजनीतिमश्रावयत् । तामाकर्ण्य सूबास्तस्य प्राणसङ्कट-मुपस्थापयाञ्चकार । इमां स्थितिं ज्ञात्वा वीरबलधरः स्वपुत्रं राजकाकमादाय लाहोरञ्जगाम । तत्र महाराजरणजीतसिंहस्य साक्षात्कारं कृतवान् । महाराजोऽस्य नीतिज्ञानेन भृशं तुष्टो भूत्वा तत्प्रेरणया १८२० खिस्ताब्दे काश्मीरमाक्रम्य ततोऽफगानशासनं समूलमुन्मूलयाञ्चकार । अन्ते महाराजस्तमेव पण्डितोगाधियुक्तं कृत्वा काश्मीरस्य सूबेदारपदे नियुक्तवान् । गतदिनं यावद्विद्यमानो मौनभिद्दरबारी रायसाहब प० श्यामसुन्दरलालधरः प० वीरबलधरस्य पौत्रपौत्र इति पं० वीरबलधरस्य मयैकोऽश्रोऽङ्कितः श्लोकः प्राप्त —

शैलेन्द्रोऽसौ तुषारैः परिवृतकटकः सर्वतापापनोत्री
लोकांस्त्रीन् प्लावयन्ती हिमसलिलमयैर्वाहिनी साऽमरणाम् ।
सा चास्ते वामगा ते हिमगिरितनया प्रेयसी सा च शीता
चान्द्री लेखा परं ते शिव परसजडः कोऽप्यहं तापहारी ॥

## कर्नलपोलियरः

अयं १७५२ खिस्ताब्दे वभूवेङ्गलैण्डे । अयं भारतवर्षमागत्य महाराजप्रतापसिंहस्य सहयोगमाप्य ब्राह्मणेभ्यश्चतुर्णां वेदानां प्रतिलिपिं कारयित्वा बृटिशम्यूजियमायार्पितवान् १७८९ खिस्ताब्दे ।

## बलटेरिया

अयं १७६१ फ्रांसदेशे बभूव अयं फारसीभाषाया उत्कृष्ट आसीद्विद्वान् संस्कृतभाषायाञ्च । अनेन वेदानां प्राच्यै

भारतागमनसत्कारि । अनेन वेदप्रदानाय प्रार्थितः कश्चिन्मद्रा-
सदेशीयो ब्राह्मणस्तत्कालमेव नवीनं यजुर्वेदं विरच्य तस्मै
दत्तवान्, यमसौ फ्रांसस्य पुस्तकालयायार्पितवान् । मैक्सी-
महोदयस्य मते कोलब्रूकमहोदयोऽपि केनचिद्विदुषा वाञ्छितो-
ऽस्मिन्नेव विषय एवमेव ।

## हेनरीटामसकोलब्रूकः

अयं १७६५ ख्रिस्ताब्दे योरोपे बभूव । अयमासीत्
संस्कृतभाषाया उत्कृष्टो विद्वान् । अनेन संस्कृतभाषाया ज्ञाना-
निकृन्तमुद्घोषितम् । संस्कृतभाषाया विभिन्नविषयकग्रन्थेषु
कृतोऽनेन सम्पादनानुवादश्रमः । हिन्दुदर्शनशास्त्रस्य वर्णनं
मनेनोचितमकारि । गणितशास्त्रेऽप्यनेन ग्रन्था निर्मिताः ।
राष्ट्रभाषाङ्कस्य परिशिष्टाङ्के मैक्सीमहोदयो वदति यदयं मद्रासी-
येन केनचिद्विदुषा वेदप्रदाने वाञ्छितो बलटेरियावत् किन्तु
१८०५ ख्रिस्ताब्दे योरोपीया अस्य कृपया वेदमधिगतवन्त
एव । अयमृग्वेदस्य मुख्यांशान् संगृह्य वैदिकान्वेषणस्य मूलमा-
रोपितवान् । मृतोऽयं १८३५ ख्रिस्ताब्दे आसीत् ।

## एलैक्जेंडरहैमिल्टनः

अयं १७६५ ख्रिस्ताब्दे इङ्गलैण्ड आसीत् । अनेन
भारते सम्प्राप्तोन्नता संस्कृतभाषायाः शिक्षा । इङ्गलैण्ड— फ्रांस-
यो जन्यं १८२४ ख्रिस्ताब्दे जातम् । अयं फ्रांसं विसृज्येङ्गलै-
ण्ड जिगमिषुर्यदा बभूव तदैव नैपोलियनबोनापार्टेन पेरिसस्य
कारागारे १८२५ ख्रिस्ताब्दे नीतः । अस्मिन् बन्धनसमये केचन
फ्रांसदेशीया अनेन संस्कृतज्ञाः कृताः । जर्मनस्य महाकविः श्ले-
गेलोऽप्येकासीच्छिष्यः । फ्रांसस्य फौजोवोपश्चात्यासीच्छात्रः ।

## सरविलियमजोन्सः

अयमिङ्गलेण्डे १७४६ खिस्ताब्द आसीत्। अयं संस्कृतभाषाया मर्मज्ञः शाकुन्तलनाटकस्य, मनुस्मृतेस्तथा ऋतुसंहारकाव्यस्यांग्रेज्यामनुवादमकरोत्। अनेन १७८४ खिस्ताब्दे जनवरीमासस्य १५ तिथौ भारतीयप्राचीनशिलालेख-ताम्रपत्रमुद्रेतिहास-भूगोल शिल्पादिपरिज्ञानाय कलकत्तानगरे बङ्गाल-एशियाटिक सोसाइटी' संस्थापिता। अनयाऽधुनाऽपि भारतीयपुरातत्वान्वेषणं क्रियते। अयं १७६४ खिस्ताब्दपर्यन्तमासीत्। अस्य शाकुन्तलनाटकाद्यनुवादमधीत्य हर्डर, गोटे प्रभृतयः कोविदा विस्मयमापुस्तथा संस्कृतभाषायाः प्रशंसां चक्रुः। अस्यैका ग्रन्थोऽस्ति भारतीयज्ञानम्।

## चार्ल्स विल्किन्सः

अयमिङ्गलेण्डे बभूव। अयं लार्डहैस्टिंग्सस्यानुरोधं स्वीकृत्य वाराणस्यां स्थित्वा च सम्यक् संस्कृतभाषां पपाठ। अथ १७८५ खिस्ताब्दे श्रीमद्भगवद्गीताया अंग्रेज्यामनुवादं चकार तथांग्रेज्यामेव हितोपदेशस्य कथासंग्रहं प्रकाशयाञ्चकार। अनेन बङ्गनरेशस्य नारायणस्य शासनकालिकः शिलालेखो दीनाजपुरस्य बदालाख्ये ग्रामे समुपलब्धः पठितश्च १७८० खिस्ताब्दे।

## पावोलिनः

अयं १७६० खिस्ताब्दे रोमनगरात् काश्यामागत्य संस्कृतभाषाध्ययनमकारोत्। तत्रैव स्थितेनानेन पाणिनिव्याकरणानुसारि व्याकरणं स्वनाम्ना लिखितम्। अयं १७६५ खिस्ताब्दे संस्कृतभाषोपनिषदां फारसीभाषायामनूदितानां फ्रेञ्चानुवादञ्चकार।

## भास्करानन्दः

अयं १८३३ विक्रमाब्दे कानपुरप्रान्तगते मैथेलालपुरग्रामे बभूव । अस्य पिता कान्यकुब्जब्राह्मणो मिश्रीलालः । भास्करानन्दस्य प्राचीनन्नाम मोतीलालेति । अस्यैकः पुत्रो जातस्ततो विरक्तो भूत्वा ३० वर्षावस्थायां काश्यां सन्यासी बभूव । अयं परमः प्रसिद्धो महात्मा । अस्य जीवनवृत्तं म० म० पं० शिवकुमारशास्त्रिणा लिखितम् । भास्करानन्दस्वामिनोपनिषदां संस्कृतटीकास्तथा स्वाराज्यसिद्धिनामा ग्रन्थो लिखितः । अनेन १८१६ विक्रमाब्दे शरीरत्यागो विहितः ।

## शालिग्रामः

अयं १८१८ विक्रमाब्दे आश्विनशुक्लतृतीयादिने मुरादाबादे जातः । अस्य पिता खुशहालराय । अयं चन्द्रवंशीयो माथुरवैश्यः । अनेन यद्यपि बहूनि पुस्तकानि लिखितान्यनूदितानि किन्तु शालिग्रामनिघण्टुनामायुर्वेदकोषोऽस्य प्रसिद्धः ।

## उमापतित्रिपाठी

अयं ख्रिस्तस्य १८ शताब्द्याः पूर्वार्द्धे अयोध्यायामासीत्त्रिपाठ्युपाधिः प्रसिद्धो विद्वान् सरयूपारीणब्राह्मणः । अनेकशास्त्रार्थेनमुपार्जितमहायशोराशिरनेकच्छात्रगुरुर्दानप्रदानगरीयाननेकग्रन्थलेखकः । अस्य ग्रन्थेषु कोविदविनोद, सरयूलहरीत्यादयः प्रसिद्धः ।

## नैमकरणमिश्रः

अयं बाराबङ्कीमण्डलगतरामसनेहीघाटतहसीलस्य धनौलीग्रामे १८३५ विक्रमाब्दे बभूव । अस्य प्रपितामहो लालमणिः

पितामहो लक्ष्मीरामः पिता आधारमिश्रश्च सरयूपारीणो ब्राह्मणः। अनेन श्रीरामरत्नाकरवृत्त, रामास्पद, गुरुकथादिपुस्तकानि रचितानि।

## सुधाकरद्विवेदी

अस्य पूर्वजा गोरखपुरप्रान्तगतब्रह्मपुरात् काशीमागताः। अयं सरयूपारीणो ब्राह्मणः। अयं स्वसमयेऽद्वितीयो गणितज्ञ आसीत्। अयं १८८३ ईसाब्दे काशीक्वींसकालिजे पुस्तकाध्यक्षपदं प्राप्य गणिताध्यापको बभूव। गवर्नमेन्टेनास्मै १८८७ ईसाब्दे महामहोपाध्यायपदवी दत्ता। अनेन बहूनि पुस्तकानि लिखितानि।

## स्वामिदयानन्दः

अयं विक्रमस्य १९ शताब्द्या उत्तरार्द्धे काठियावाड़स्य मोरवीराज्ये जातः। अयं पूर्णानन्दस्य शिष्यतां प्राप्य मथुरायां प्रज्ञाचक्षुर्विरजानन्दात् संस्कृतभाषां पपाठ। अनेन सत्यार्थप्रकाश, ऋग्वेदभाष्यभूमिकादयो ग्रन्था हिन्दीभाषायां लिखिताः। अयं संस्कृतभाषायाः प्रचारं कामयते स्म। अनेनार्यसमाजश्चालितः। काश्यां स्वामिविशुद्धानन्देन सहास्य कश्चित् शास्त्रार्थो जातः। वेदप्रचारेऽयं सुयत्नं कृतवान्। कयाचिद्रमानाम्न्या स्त्रिया सहाऽस्यासीत् सम्बन्ध इति रमामर्षिसम्वाद। अस्य जन्मस्थानजात्याचारादिविषये सत्यता न प्राप्यते। अयं प्रसिद्धो विद्वान् कयाचिद्वेश्यया विषद्वाराऽजमेरे मारितो १८८३ ईसाब्दे।

## रसिकविहारी

अयं खिस्तस्योनविंशतिशताब्द्यामासीत्। श्रूयते जन्मास्य झांसीनगरे जातं किन्तु वसतिरस्मायोध्यायां कनकभवने। अय-

आसीद् यद्यपि जानकीदासनामा किन्तु रसिकविहारीत्याख्ययैव प्रसिद्धिं गतः। अस्य शरीरत्यागस्तीर्थयात्रां प्रकुर्वतो मेवाड़े जातः। अस्य रचना हिन्दीपुस्तकेषु प्राप्यन्ते। अस्य रचनेदृशी-

देहि वरदानं वीर सम्प्रति यथेच्छितं हि,
कुरु चानुकम्पां तव चरणौ भजाम्यहम् ॥

दुर्जनान् भञ्जय, विभञ्जय सुदुर्दिनानि,
आञ्जनेय वीर ! दीनवचसा वदाम्यहम् ॥

झटिति गृहाण हेऽनिलात्मज तवाशनाय,
कलुषदरिद्रारातियूथपं ददाम्यहम् !

पूरयतु वित्तं रसिकेशायानुमोदं दातु,
पवनात्मजो मां पातु शिरसा नमाम्यहम् ॥

## अम्बिकादत्तव्यासः

अस्य पिता दुर्गादत्तः पितामहश्च राजारामः। अयं १८१५ विक्रमाब्दे जातः काश्याम्। अयं साहित्याचार्यः, घटिकाशतकः सुकविः भारतरत्नाद्युपाधिभूषितः ७८ संस्कृहिन्दी ग्रन्थानां निर्माता श्रूयते। अस्य शिवराजविजयनामा गद्यग्रन्थः प्रसिद्धः। अयं १९०) विक्रमाब्दे परलोकवासी बभूव।

## राधाकान्तदेवः

कलकत्तानगरगतशोभावाजारेऽस्य पितामहो नवकृष्णदेवो वसति स्म। अस्य पिता गोपीमोहनदेवः। अयं कायस्थ आसीत् ख्रिस्तस्योनविंशत्यां शताब्द्याम्। अनेन पुरा संस्कृतो-र्दुफारसी, बङ्गला, हिन्दीनां शिक्षा गृह एव प्राप्ता। ततो बङ्गा-

स्यैकमात्रे बहूबाजारस्थांग्रेजीस्कूले शिक्षा प्राप्ता। अयं बङ्गाल-एशियाटिक सोसाइट्याः सदस्यो भूत्वा काशीकिन्सकालिज-स्थापनस्य कारणतां गतः। अनेन संस्कृतभाषायाः वृहत्कोषः शब्दकल्पद्रुमाभिधो लिखितः। अनेन कलकत्ताहिन्दूकालिजस्य स्थापनाय सुदीर्घः प्रयत्नः कृतः। अयं के० सी० एस० आई० राजाबहादुरपदेव्यालङ्कृतो वृन्दाबने १८६९ विक्रमाब्दे शरीरं त्यक्तवान्।

## मैक्समूलरः

अयं मोक्षमूलरापरनामा १८२३ ईसाब्दे जर्मनदेशे बभूव। अनेन बर्लिने पेरिसे च संस्कृतभाषा पठिता। अयं १८४६ ईसाब्दे इङ्गलैण्डमागतवान्। अधुनैवायमीष्ट इण्डिया-कम्पन्या ऋग्वेदप्रकाशनाय नियुक्तीकृतस्तथा आक्सफोर्ड यूनि-वर्सिट्यां प्रोफेसरो बभूव। यद्यप्ययमनेकभाषापण्डित आसीत तथाप्यस्य संस्कृतभाषायां परमाधिकारः सर्वैः स्वीकृतः। अनेन हिन्दूनां तथा बौद्धानामनेकधर्मग्रन्था अंग्रेजीभाषायामनूदिताः। अंग्रेजीभाषायामृग्वेदस्यानुवादोऽस्य प्रसिद्धः। एडिन्बराकैम्ब्रिज-यूनिवर्सिट्यावस्मै एल० एल० डी० उपाधिमर्पितवन्तयौ। अयं १८६८ ईसाब्दे परलोकं गतः।

## फ्रेडिकश्लेगेलः

अयमासीज्जर्मनदेशे १८२४ ख्रिस्ताब्दे। अनेन पेरिसका-रागारवासिन एलक्जेन्डरहैमिल्टनात् संस्कृतभाषाऽधीता। अनेन "भारतीयभाषाबुद्धी" तिनामा ग्रन्थो व्यलेखि येन जर्मनदेशीयानां हृदि संस्कृतभाषाध्ययनप्रबलोत्कण्ठा जागृता अभूत। अयं महाकविः

## बौपः

अयमासीदेलैक्जेन्डरहैमिल्टनस्य शिष्यः। फ्रेड्रिकश्लेगलस्य सहपाठी फ्रांसे १८२४ खिस्ताब्दे अयमासीत्। अयं ग्रिमस्य, हम्बोल्टस्य च सहायतां प्राप्य संस्कृतं, ग्रीक, लैटिन, ट्यूटनिक, केल्टिकभाषाणां समन्वयं कृत्वा साधितवान् यदिमाः सर्वा भाषाः संस्कृतादेवोत्पन्नाः। तदानीन्तना जार्मन्तस्य जना यद् सम्पूर्णसभ्यतारम्भो ग्रीकलैटिन-द्वारा जातोऽनोऽस्योपहासमकुर्वन्, किन्तु पश्चात् सर्वे स्वीकृतवन्तो यद् बौपस्य भाषाविज्ञानं सत्यमस्ति।

## वाल्टरइलियटः

अयमिङ्गलेण्डवासी भारतवर्षमागत्य संस्कृतशिक्षां सम्प्राप्य प्राचीनसंस्कृतशिलालेखानां तथा संस्कृतबलेन विभिन्नप्रान्तीयभाषाशिलालेखानां वाचने सुदीर्घदक्षतामाप। प्राचीनकैनाडीभाषायाः शिलालेखानां पठनं १८०० खिस्ताब्देऽतिकठिनमासीत् किन्त्वनेनात्र भूयान् परिश्रमोऽकारि, येन प्राचीनकनाडीवर्णानां माला निर्मिता, यया वृद्धाभाषागतशिलालेखपठनं सरलं जातम्।

## एफ रोजनः

अयं विद्वान् जर्मनदेशस्य। अयं १८३० खिस्ताब्दे भारतवर्षमागत्य 'ईस्टइण्डियाहाउस'—गतानां हस्तलिखितग्रन्थानां संग्रहमधीत्य योरोपाय संस्कृतसाहित्यस्य पूर्णं महत्त्वं समर्पितवान्। अयमृग्वेदस्य प्रथमाष्टमण्डलानां लैटिनभाषानुवादं चकार कारयामास च किन्तु १८३८ खिस्ताब्दे कालकवलिताऽभूदतस्तस्यानुवादकार्यमसम्पूर्णमेव स्थितम्।

## कर्नलजेम्सटाड

अयं विद्वान् भारतवर्षमागत्य कस्यचिज्जैनधर्मावलम्बिनो ज्ञानचन्द्रयतिविदुषः शिष्यतामाप्य संस्कृतभाषां सम्यक् पपाठ अथ राजपूतानेतिहासलेखनाभिलाषिणाऽनेन स्वगुरोः सहायतयाऽनेके शिलालेखाः पठिताः स्वकीये इतिहासग्रन्थे च संस्थापिताः । अयं १८२३ ख्रिस्ताब्दे आसीद् भारतवर्षे ।

## बी० जी० बबिंग्टनः

अयं योरोपीयो विद्वान् १८२८ ख्रिस्ताब्दे भारते आसीत् । अनेन भारतीयाः केचन शिलालेखाः संस्कृततामिलभाषयोः पठिताः । तामिलभाषाया वर्णमालाऽपि शिलालेखपठनयोग्या सज्जीकृताऽनेन ।

## कैप्टनट्रायरः

अयं योरोपीयो विद्वान् १८२४ ख्रिस्ताब्दे भारते आसीत् अनेन संस्कृतभाषायाः शिलालेखा अनेकेऽधीताः । अयं प्रयागस्थाशोकस्तम्भगतलेखस्य केचनांशाः सर्वप्रथमं पठिताः । अनेनाधीतेषु शिलालेखेषु केचन गुप्तवंशीयस्य समुद्रगुप्तस्यासन् ।

## डा० मिल

अयं योरोपवासी १८३४ ख्रिस्ताब्दे भारते आसीत् । अनेन संस्कृतभाषाया अनेके शिलालेखाः पठिताः कृतार्थाश्च जाताः । प्रयागीयाशोकस्तम्भस्य कैप्टनट्रायराध्ययनावशिष्टोऽशोऽनेन पठितः । अयं विद्वान् कैप्टनट्रायरस्य सहायतामाश्रित्य भिटारीस्थं स्कन्दगुप्तनृपस्य स्तम्भं १६३७ ख्रिस्ताब्दे पपाठ ।

## बर्नफः

अयं फ्रांसवासी पेरिसविश्वविद्यालयस्य संस्कृतभाषायाः प्रधानाचार्यः। अस्यैव शिष्यो मैक्समूलरः । पूर्वीयविषयाणां विद्वान् श्रूयते नास्मादधिकः कश्चिद् बभूव । सर्वप्रथममनेनैव साधितो जेन्दभाषाया वैदिकभाषायाश्च पारस्परिकः सम्बन्धो येन जेन्दभाषाया मूलं संस्कृतं सिद्धम् । अनेन ऋग्वेदस्य व्याख्याऽकारि सर्वप्रथममनेनैव बुद्धदर्शनस्य स्पष्टं वर्णनमकारि स्वकीये "बुद्धिज्म" ग्रन्थे । योरोपेऽस्य भारतसम्बन्धिलेखैः १८२९ खिस्ताब्दादारभ्य १८५१ खिस्ताब्दपर्यन्तं क्रान्तिरिवानुभूता गवेषणाकुशलैः ।

## रडल्फरौथ

अयं जर्मनवासी बर्नफस्य शिष्यः । अस्य समयः १८११ खिस्ताब्दादारभ्य १८९५ खिस्ताब्दपर्यन्तं वर्तते । अनेन वैदिकभाषाध्ययनं पूर्णमकारि । अनेन १८४६ खिस्ताब्दे "वैदिकसाहित्यं तदितिहासश्च" इति पुस्तकमलेखि । यास्ककृतनिरुक्तव्याख्याटिप्पणेन सहितमेकं संस्करणं जर्मनात् प्रकाशितवानयम् । अयमेव ह्विटनीमहोदयस्य सहायतामाप्याथर्ववेदस्य सावंचनं संस्करणमेकं प्रकटीचकार तथा महान्तं परिश्रमं कृत्वा बोहलिङ्कस्य सहायतया संस्कृतभाषाया बृहत्तरं विशुद्धं कोशं लिलेख ।

## बोहूलिङ्कः

अयं बर्नफस्य शिष्यः १८४५ खिस्ताब्दे योरोप आसीत् । अयं रडल्फरौथमहोदयेन सह संस्कृतकोषनिर्माणे महान्तं परिश्रमं कृतवान् ।

## वेबरः

अयं जर्मनवासी १८४९ ख्रिस्ताब्द आसीद् भारते। अनेन बर्लिननगराद् यः संस्कृतभाषाया इतिहासोऽलेखि तेन पाश्चात्यास्तथा भारतीया बहूपकृताः। अयं वर्षत्रयं यावद् घोरपरिश्रमं कृत्वा काण्वमाध्यन्दिनशाखीयां वाजसनेयिशुक्लयजुर्वेदसंहितां महीधरभाष्ययुतां शोभनरीत्यां प्रकाशितवान्। ब्राह्मणसूत्रग्रन्थानामपि साहित्यमनेन स्पष्टं प्रकटीकृतम्। अस्य भारतीयसाहित्येतिहासोऽध्ययनीयः।

## डा० रोयरः

अयमिङ्गलेण्डवासी १८६४ ख्रिस्ताब्द आसीत्। अनेन बङ्गाल एशियाटिक सोसाइट्याः सहायतामाप्य कृष्णयजुर्वेदीयतैत्तिरीयसंहितायाः प्रकाशनं प्रारब्धं सटिप्पणं किन्तु पूर्णं न जातम्।

## डा० कावेल

अयमिङ्गलेण्डवासी १८६२ तः १८७० ख्रिस्ताब्दपर्यन्तं भारते स्थित्वा डा० रोयरेण प्रारब्धं कृष्णयजुर्वेदीयतैत्तिरीयसंहितायाः प्रकाशनं सम्पूर्णं कृतवानष्टवर्षाभ्यन्तरे। कृष्णयजुर्वेदीयमैत्रेय्युपनिषदः प्रकाशनं बङ्गाल एशियाटिक सोसाइटीतः कृतवान्।

## डा० बूलरः

अयं योरोपवासी १८७० ख्रिस्ताब्द आसीत्। अनेन भारतीयधर्मशास्त्राणामध्ययनं पूर्णतयाऽकारि। अस्यापस्तम्बकृतधर्मसूत्राणां सटिप्पणं प्रकाशनं तद्विषयकं प्रकाण्डं पाण्डित्यमुद्घोषयति। बहूनां विचारे ग्रन्थोऽयमस्यैवेति प्रतीयते यथा।

## पेरोस्राहवः

अयं यद्यपि योरोपवासी तथापि सुल्तानमुहम्मददाराशाहस्य समीपे भारते वसति स्म । अनेनात्रैव संस्कृतफारस्योः पूर्णमध्ययनमकारि । दाराशाहस्याज्ञामनुसृत्य फारस्यामनूदितानां ५० उपनिषदामंग्रेजीभाषायां संस्कृतानुसारिणीं टीकां लिखितवान् ।

## ब्योरः

अयं योरोपीयो वैदिक-पुराण--साहित्यस्य विद्वान् १८६५ खिस्ताब्द आसीत् । अनेन संस्कृतसाहित्यस्योत्कृष्टताप्रकटीकरणाय भूयान् परिश्रमोऽकारि । अयं पञ्चखण्डेषु वेदपुराणयोः सदुत्कृष्टामालोचनाञ्चकार यामवलोक्य चेतश्चकितञ्जायते ।

## जनरल-वारन-हेस्टिंग्ज़

अयं भारतस्य भूतपूर्वो गवर्नरः संस्कृतभाषायाः समुपासकः अनेन काशीस्थपण्डितानां सहायतया भारतीयधर्मशास्त्राणां सारांशाः फारस्यां कारिताः पश्चादंग्रेजीभाषायामनूदिताः इमानवलोक्यानेके योरोपीया विद्वांसो भारतवर्षमगमन् धर्मशास्त्राध्ययनाय ।

## बर्नलरः

अयं जर्मनवासी १६०० खिस्ताब्द आसीत् । अनेन प्राचीनधर्मशास्त्राणां विषय एको महानिबन्धोऽलेखि यस्मिन् भारतीयानां धर्मशास्त्रतत्त्वज्ञानं निःक्षिप्य संस्कृतभाषायाः परमोपकारः साधितः ।

## फ्री॰ हार्नः

अयमपि जर्मनदेशीयो वस्तरस्य समय आसीत्। अनेन संस्कृतसाहित्यस्येतिहासोऽलेखि, यत्र विश्वभाषाणां जननी संस्कृतभाषैव मता।

## डा॰ हेगः

अयमप्याँग्लदेशवासी १८५४ खिस्ताब्दे भारत आगत आसीत्। अनेन संस्कृतभाषा मद्रासे पठिता। अयमैतरेयब्राह्मणग्रन्थस्यानुवादश्चकार।

## डा॰ थीबोसाहबः

अयं योरोपीयो विद्वान् खिस्तस्याष्टादशशतकोत्तरे प्रयागविश्वविद्यालये गणिताध्यापक आसीत्। अनेन संस्कृतरेखागणितस्याधार एको माननीयो ग्रन्थोऽलेखि।

## वेनिसः

अयमिङ्गलैण्डवासी विद्वान् संस्कृतभाषायाः समुचितां शिक्षामादाय काशीक्वीन्सकालिजस्य प्रिंसिपलोऽभवत् १६०८ खिस्ताब्दे। काश्यामस्य शिष्या अधुनापि केचन हिन्दुपण्डिता वर्तन्ते।

## डा॰ मेक्डोनलः

अयमिङ्गलैण्डीयो विद्वान् १६०० खिस्ताब्द आसीत्। अनेन संस्कृतभाषाया इतिहासोऽलेखि यस्मिन् १८५० ईसाब्दं यावज्जातानां संस्कृतभाषासम्बन्धिनामन्वेषणानां समावेशो वर्तते। अयमासीत् संस्कृतभाषायास्तथा भारतवर्षस्य पक्षपाती।

### डा० एच० एच० विल्सनः

अयं भारतस्य पूर्वगवर्नरस्य मेकाले-महोदयस्य समय आसीत्। कलकत्तासंस्कृतविश्वविद्यालयोन्नतिकरोऽयम्। अयं कालक्रममनुसृत्य ऋग्वेदसंहिताया अंशेऽनुवादं चकार। अनेन संस्कृतभाषाया उत्तमनाटकानां, विष्णुपुराणस्य, मेघदूत-काव्यस्य च टीकाकारि। अनेन संस्कृतभाषायाः पक्षपातः सदैव विहितः। अस्य कथनमासीत्।

न जाने विद्यते किं तन्माधुर्यमत्र संस्कृते।
सर्वदैव समुन्मत्ता येन वैदेशिका वयम्॥

### जाली

अयं जर्मनस्य विद्वान् १८०५ खिस्ताब्द आसीत्। अनेन हिन्दुधर्मशास्त्राणां तथायुर्वेदस्य प्रशस्ता शिक्षाऽदत्ता। भारतीयसंस्कृतिविज्ञानां जर्मनपण्डितानां मध्येऽस्य महती प्रतिष्ठा वर्तते स्म।

### याकोबी

अयं जर्मने आल्ब्रीमहोदयस्य समय आसीत्। अयं जैनधर्मस्य प्रकाशको विद्वान् जैनधर्मग्रन्थांस्तु लिखितवानेव भारतीयव्याकरणालङ्कारज्योतिषशास्त्रेष्वप्यनेकान् ग्रन्थान् रचितवान्। जर्मनस्य प्रायः सर्वेष्वेव विश्वविद्यालयेष्वस्य ग्रन्थाः पाठ्यन्ते।

### लायडमः

अयं जर्मनवासी याकोबीमहोदयस्य समये वर्तते स्म। अयं जर्मनीय-म्यूनच-विश्वविद्यालये संस्कृतभाषाया महाध्यापकः। अनेन जर्मने संस्कृतभाषाया यन्महत्त्वं प्रकटीकृतं तत्र [illegible]

भाषितास्तत्रत्या विद्वांसः संस्कृतभाषां सर्वभाषोत्कृष्टां मन्यन्ते

## ओटोलिने

अयं जर्मनदेशीयो विद्वान् प्रोफेसरलायदर्सस्य समकालिकः। अनेन ब्राह्मणग्रन्थाः सम्यगधीतास्तदुपरि बहवोऽध्ययनीया निबन्धा निबद्धाः।

## गोल्डनस्टेट:

अयं जर्मनगतगाजिटननगरवासी ओटोलिने-महोदयस्य समये बभूव। गोल्डेननटेन जर्मनभाषायां यः सम्पूर्णऋग्वेदस्यानुवादोऽकारि तदुपरि सहपाठिना क्लिविङ्गेन सह तात्कालिकेन पीगेन तद्विषयबहुज्ञताख्यापका बहवो निबन्धा लिखिताः येषामधुना बहुमानं वर्तते तत्र। अयमृग्वेदस्यनुवादस्तत्रत्येन हावर्डमहाविद्यालयेन प्रकाशितः। अयास्मिन् विश्वविद्यालये संस्कृतभाषाध्यापक आसीत्।

## नीवेलः

अयं जर्मनदेशीयो विद्वान् प्रोफेसर गोल्डननेटस्य समकालिकः। उक्तप्रोफेसरेण यदा स्वपदत्यागोऽकारि तदाऽयं तस्य स्थाने हार्वर्डविश्वविद्यालये संस्कृताध्यापको बभूव। अयं "भारतीयकाव्यानामाधार" इति ग्रन्थस्य लेखकः। अयं ग्रन्थः कलकत्ताविश्वविद्यालयेन प्रकाशितः।

## नाइस्मेर:

अयं जर्मनदेशीयः पीगस्य शिष्यः। अयं गोल्डननेटस्य ऋग्वेदभाष्यं तथा स्वगुरोस्तदुपरि रचितनिबन्धानधीत्य ऋग्वेदशब्दकोशस्य निर्माणमकार्षीत्।

### मित्रिण:

अयं गोल्डनस्टेकरस्य शिष्य: पीगलस्य सहाध्यायी जर्मनो बभूव अनेन स्वगुरो: ऋग्वेदभाष्येऽनेक निबन्धा निबद्धा:। अस्य शिष्येषु न्यायदर्शनस्यानुवादको डा० साबेन:, भारतीयसङ्गीतशास्त्रे लब्धकौशलो याज्ञवल्क्यस्मृतौ महाग्रन्थलेखको डा० लशा:, मंस्टरविश्वविद्यालयसंस्कृतभाषाध्यापक: कामशास्त्रपण्डित:, गोपहजकश्च विद्यते।

### लांवीक:

अयं जर्मनस्य विद्वान् नीवेलस्य समकालिक: पाणिनिचान्द्रव्याकरणेऽनेकग्रन्थानां लेखको येषां भारतेऽपि मानमस्ति। अस्य शिष्येषु हेयरो योगशास्त्रे ओटोमहाशयो धर्मशास्त्रे, डा० प्रित: पौरस्त्येऽनेकग्रन्थलेखका वर्तन्ते ।

### गुलाबराव:

विदर्भप्रान्तीयस्य अमरावतीमण्डलस्य माधानग्रामे १८८२ ख्रिस्ताब्दे अयं मोहोडजातावुत्पन्न:। अयमत्राह्मण:। एतस्य पिता गोंदूजि:, माता च अलोकबाई इति। अयमुत्पत्तेरनन्तरमभूदन्ध:, किन्त्वन्धताया: कृपया कदाचिदस्मिन् अनेका अद्भुता वार्ता उत्पन्ना:। एकप्रकारेण जन्मान्ध: एवायं करस्थकङ्कणध्वनिमाकर्ण्य कङ्कणवस्या नाम वदति स्म।

एकदा तत्करान्दोलनेन शय्याया निकटे विद्यमानो दीप: पतितो येन वास: प्रदीप्तमभून्मातुलान्या। सा यदा तं ताडयितुमुद्यताऽभूत् तदा तेनोक्तम्- क्लिन्नं ते वस्त्रम् प्रक्षालितव्यात् किन्तु तदुपरि पतितं मृत्तैलमेव। वस्त्रं क्लिन्नमिति क·

थमनेन ज्ञातमिति विचिन्त्य सर्वास्तद्गोष्ठिगता महिलाश्चकिता अभूवन्। एकदा भोजनात् पूर्वमयमुत्थाय हस्तौ प्रसार्य भाजिलिङ्गे इव। किमेतत् क्रियते इति पृष्टोऽवदन्मदीयो मित्रमासीदागतम्। अस्यासीत् प्रखरा स्मरणशक्तिः। शास्त्रीयशिक्षासंस्काररहितोऽप्ययं सर्वं श्रुत्वा चिराय कण्ठस्थीकरोति स्म। ग्रामीणभागवतानुकारामकृताभङ्गानां कण्ठस्थीकरणादस्मिन् सहसैव संस्कृतज्ञानमुज्जृम्भितम्। अयमाद्यो मराठ्यास्ततः संस्कृतस्य च कविरभूद्विद्वान्, ग्रन्थकारः। एतच्छिष्यः नारायणपैकाजिरेतत्कृतां 'सूक्तिरत्नावलीम्' सम्पाद्य प्रकाशयामास। तस्या भूमिकायामधोऽङ्कितांस्तत्कृतान् ग्रन्थानलिखत्—

१—नारदभक्तिसूत्रभाष्यम्, २—बालवाशिष्ठम्, ३—शास्त्रसमन्वयः, ४—उच्छिष्टपुष्टिलेशः, ५—श्रीधरोच्छिष्टपुष्टिः, ६—तत्वबोधः ७—आगमदीपिका, ८—षड्दर्शनलेशसंग्रहः, ९—युक्तितत्वानुशासनम्, १०—ऋग्वेदटिप्पणी, ११—सांख्यनिर्णयः, १२—भक्तितत्वविवेकः, १३—भागवतविज्ञानसंहिता, १४—दुर्गातत्वम् (सूत्रमयम्), १५—ईश्वरदर्शनम् १६—शिशुबोधव्याकरणम् १७—पुराणमीमांसा (सूत्रमयी), १८—प्रियप्रेमोन्मादः, १९—स्वमतनिर्णयः, २०—काव्यसूत्रसंहिता, २१—भिषगिन्द्रशचिप्रभा, २२—मानसायुर्वेदः, २३—न्यायसूत्राणि, २४—सूक्तिमुक्तावलीति च। इमे सर्वे प्रकाशिताः ज्ञानेश्वरसंस्थानं दहीवाथ, अमरावती (विदर्भ) इति।

भवतेदृशं दुर्लभं नैपुण्यं कुत उपलब्धमिति प्रश्नस्योत्तरे तेनोक्तम्—तत्तस्यानुग्रह इति। अयं ज्ञानेश्वरमहाराजं 'तात' इति कथयति स्म। कचिदसमासममं 'ज्ञानेश्वरकन्यका'

इति वदन्ति । गुलाबरावमहोदयः प्रायः सर्वेषां ग्रन्थानामादौ लिखति—

'उमा माता पिता शम्भुर्गुरुर्ज्ञानेश्वरो महान् ।
पतिः कृष्णो राधिकाम्बा भगिन्यो गोपिका मम' ॥

मधुराद्वैतपरस्य श्रीकृष्णस्य पतित्वं, गोपिकानाञ्च भगिनीत्वं दर्शितमत्रेति प्रतीयते ।

गुलाबरावस्य वास्तविकं नाम पाण्डुरङ्गनाथ इति । तज्जन्मभूमौ माधानग्रामे तत्सजातीयः सीतारामभोयरो वसति स्म । एकस्मिन् दिने भोयरोऽवोचद्—यदि एकेनैव मुष्टिप्रहारेण कठिनत्वसमादृढं दृढं नारिकेलफलं त्रोटयेस्तर्हि अहं तुभ्यं स्वपुत्रीं भार्यात्वेन दास्यामि गुलाबरावस्तल्लीलयैव त्रोटयाञ्चकार । इत्थं तस्य विवाहोऽभूत् । समये तस्य कन्यापि भक्तिमती समभवत् । अस्य रचनैवाहुरी —

शाङ्करज्ञानसंयुक्तं भगवद्भक्त्यलंकृतम् ।
यद्वाक्यं तत्प्रमाणं स्यादिति स्वमतनिर्णयः ॥
धर्मो ज्ञानं हरेर्भक्तिः पालनीयं त्रयं सदा ।
नीतिः कालानुरोधेनास्त्विति स्वमतनिर्णयः ॥
सत्त्वबुद्धिर्भवेद्येनान्यगुणाढ्यवालिनो ।
स हि धर्मो न चान्यः स्यादिति स्वमतनिर्णयः ॥
स्वधर्मे परधर्मे वा यत्सत्त्वफलसाधकम् ।
तत्तदस्तु परं धर्म इति स्वमतनिर्णयः ॥
पशौ दण्डः शिशौ मानं शठे शाठ्यमृजौ रतिः ।
सभ्येषु सभ्यता नीतिरिति स्वमतनिर्णयः ॥
श्रोतव्यौ श्रुतिशास्त्राभ्यां मन्तव्यौ चोपपत्तिभिः

ध्यानादनुभवाज्ज्ञानमिति स्वमतनिर्णयः ॥
धार्मिकास्वपि नारीषु जनलीकान्यकादिषु ।
विश्वासो नैव कर्त्तव्यः इति स्वमतनिर्णयः ॥
विष्णुं सव्ये हृदि ध्यायेद् वामे हृदि महेश्वरम् ।
सहस्रारे गुरुं ध्यायेदिति स्वमतनिर्णयः ॥

## शिवकुमारशास्त्री

अयं काश्युत्तरवर्ति युन्दीग्रामे १९०४ विक्रमाब्दे फाल्गुनकृष्णैकादश्यामभूत् । अस्य पिता घृतकौशिकगोत्रजो रामसेवकमिश्रः । यद्यपि बहिर्गतः शिवकुमारशास्त्री कैश्चित् पृष्टः स्वां कान्यकुब्जब्राह्मणमेव वदतिस्म किन्त्वासीदयं सरयूपारीणब्राह्मण एव । पञ्चगौड़ेषु सरयूपारीणा ब्राह्मणाः कान्यकुब्जब्राह्मणेष्वेवान्तर्भवन्ति । अयमादौ स्वगृह एव शिक्षामधिगत्य पितृव्यान्तिके वेनियाराजधानीमाजगाम । तत्र वाणीदत्तादधीत्य काशीमुपेतवान् । तत्र दुर्गादत्त, कालीप्रसादशिरोमणि, बालशास्त्रिणामन्तिके सर्वशास्त्राण्यधिजगे । अनन्तरं स्वसमयेऽद्वितीयमहाविदुषः स्वामिविशुद्धानन्दस्य सविधे सर्वशास्त्राणां पुनरनुशीलनं कृत्वोत्तरमीमांसां सम्यक् पपाठ । अथायं संसारप्रसिद्धो विद्वानभूत् । काशीक्विन्सकालिजे यद्यप्यध्यापको बभूव किन्तु स्वामिमहाराजानामाज्ञया दरभङ्गापाठशालायामध्यक्षपदमलंकृतवान् विक्टोरियाया जुबल्यवसरेऽयं महामहोपाध्यायपदव्याऽलंकृतः । समस्ते भूमण्डले कोऽपि नासीद्विद्वान् योऽस्य शास्त्रार्थसंरम्भं सोढुं शक्नुयात । अस्य तर्कपरम्परामाकर्ण्य महावावदूका अपि मूका भवन्ति स्म ।

अयं स्वामिमहाराजं सरस्वत्यवतारं स चामुं शिवाव-तारं मन्यते स्म । अयं परमः सज्जनः सर्वैः सह समाहूतो ऽप्यसदृशैः शास्त्रार्थाय तत्क्षणमेव न समुद्यतो बभूव । अस्य के-चन शिष्या अधुनाऽपि महापण्डिता विद्यन्ते । अस्य शरीर-त्यागे जातायां टाउनहाले शोकसभायामेका कविता मयाऽप्य-पाठि तत्कृपाभाजनेन । केवलमध्यापनवृत्तिनिरतेनानेन न ग्र-न्थलेखनसमयः प्राप्तः । लक्ष्मीश्वरविजयकाव्यं, भास्करानन्द-जीवनचरितमस्य प्राप्यते । अस्य रचनेदृशी—

सोल्लासमोशेन निरीक्ष्यमाणा सौभाग्यसौन्दर्यसुतप्रभावा ।
सिन्दूरभूषाञ्चितरत्नभाला प्रसन्ना पुरन्ध्री वरमङ्गलं स्यात् ॥

कैलाशाञ्चितरत्नशृङ्गविलसत्कुञ्जोपरीङ्गन्मरु-
द्भिङ्गद्रीरुदुपेतकूजदलिनीरम्यस्वरोद्बोधितः ।
स्वात्मानन्दरसावबोधचतुरोऽप्युन्मील्य नेत्राञ्चलं,
वामाङ्गेन विचित्रबन्धघटनां कुर्वन् हरः पातु वः ॥

क्वचिद् वीणावादं क्वचिदपि परब्रह्मकलनां,
क्वचिद् तर्कश्रेणिं क्वचिदपि महाकाव्यरचनाम् !
क्वचिद् दिव्यां शिल्पं क्वचिदखिलविद्यावितरणं,
धरन्ती वाग्देवी प्रकृतकृतिसाहाय्यमयताम् ॥

## नीलकण्ठः

कौण्डिन्यगोत्रभवस्तैलङ्गब्राह्मणो रामभट्टोऽस्य पिता नीलकण्ठोऽहोबलमठसमीपवर्तमाने पण्यग्रामे बभूव । अनेन अभिनवदीधितिटीका मणिप्रभा, तर्कसंग्रहस्य च टीका नीलक-ण्ठा लिखिता । अनेन १८४० खिस्ताब्दे शरीरत्यागः काश्यां कृतः । अस्य रचनेदृशी—

वन्दे गुरुं शिवं साम्बं दक्षिणामूर्तिमव्ययम् ।
[illegible] मूढोऽपि विन्देद् गुरुसमां [illegible] ॥

## लक्ष्मीनृसिंहः ।

अयं नीलकण्ठभट्टस्य पुत्रः खिस्तस्य १८१६ शतके बभूव । परलोकं प्रस्थितायां सहधर्मिण्यां सन्तत्या हीनः काश्यां धन्वन्तरिकूपान्तिके वसति स्म । अनेन स्वपितृकृततर्कसंग्रहटीकाया नीलकण्ठ्यभिधाया उपरि भास्करोदयाख्या व्याख्या लिखिता । श्रूयते ऽस्य राधामाधवविलासाभिधः प्रबन्धः शृङ्गारमयः । अनेन १८६३ खिस्ताब्दे काश्यां शरीरं त्यक्तम् । अस्य रचनेदृशी—

मक्षिका मधुलोभेन पुष्पेभ्योमधु पुष्कलम् ।
कुर्वन्ति संचयं स्वार्थं भुङ्क्ते भाग्यात् परो जनः ॥
मात्सर्यं तु समुत्सार्य स्वान्तं स्वालोक्य सद्बुधाः ।
दूष्यं चेद् दूष्यतां तावत्तुष्यतां वा न मे भिदा ।

## लल्लदीक्षितः

अयं १८५६ विक्रमाब्दे काश्यामासीत् । अस्य पिता लक्ष्मणदीक्षितः पितामहश्च शङ्करः । अयं महाराष्ट्रब्राह्मणः । आनन्दमन्दिरस्तोत्रमनेन रचितम् । अस्य रचनेदृशी—

वृन्दारकावलिकिरीटमणिप्रकाशनी, राजिताङ्घ्रि युगला कमलायताक्षी ।
शाणाम्बरावृततनुर्निजभव्यभूमिः, श्रीसङ्कटाऽद्य विकटाऽवतु सङ्कटान्नः ॥
ब्रह्माण्डखण्डभवनानि लसन्ति यस्यां, तोयेषु बुद्बुदकलानि च चञ्चलानि ।
सा मे कथन्नु वचसां विषयः परः स्यात्तन्मे क्षमस्व गदितं तनयस्य मातः !

## हरिप्रसादः

अयं काशिराज चेतसिंहमहाराजस्य प्रधानः कविः । अनेन १८३७ विक्रमाब्दे विहारीसतसय्याः संस्कृतानुवादः कृतः । अस्य रचनेदृशी—

सा राधा भवबाधा विविधामपहरतु नागरिकी ।
यस्यास्तनुतनुकान्त्या कान्तः श्यामो हरिर्भवति ॥
दत्तमनाकर्णनमिह सम्यगथाभूद् वृथा ममाह्वानम् ।
मन्ये तारणविरुदस्त्यक्तो द्विरदं समुत्तार्य ॥

व्रजनाथः ।

अयं तैलङ्गब्राह्मणो १८१४ विक्रमाब्दे वृन्दावन आसी-त् । अस्य पिता रामकृष्णः पितामहश्च भूधरभट्टः । अनेन मनो-दूतनामकं काव्यमलेखि । अस्य रचनेदृशी—

विना युद्धं पार्थानभिभवितुमिच्छन्तमचिरात् ।
इदं प्राह स्वैरं शकुनिरवितर्वोऽन्धस्य तनयम् ॥
अयं ज्येष्ठः कुन्तीसुत इह यदि द्यूतसदने ।
समाहूयानेयस्त्वरितमथ जेष्यामि तमहम् ॥
अये सर्वज्ञस्त्वं व्यसनमिदमल्पेतरमहो,
विदित्वाऽपि स्वामिन् ! मयि कथमुदासोऽसि भगवन् !
भृशार्ताऽहं रोदिष्यतिशयितदुःखाब्धिपतिताऽ-
थवा श्रीमन्नान्यस्त्वमिह मृदुभावं भज मयि ॥

एम० विन्टरनीज़

अनेन प्रसिद्धशर्मण्यविदुषा मेक्समूलरस्य साहा-य्यसम्पादितं ऋग्वेदस्य द्वितीय-संस्करणप्रकाशनावसरे । अ-नेन स्वभाषाया वैदिक-साहित्यस्येतिहासोऽपि लिखितः १९०४ ख्रिस्ताब्दे खण्डत्रये प्रकाशितश्च । तस्य आँग्लभाषानुवादोऽपि हिस्ट्री आफ संस्कृत लिटरेचर' नाम्ना प्रकाशितः । समधिकं लोकप्रियोऽयमितिहासो विश्वविद्यालयेषु एम० ए० कक्षा पाठ्ये नियुक्तः । अस्य 'एन्श्येन्ट वेल्ड हिस्ट्री' नामको ग्रन्थो १८६५ ख्रिस्ताब्दे प्रकाशितः । एतनापस्तम्बगृह्यसूत्रमपि सम्पादितम् ।

# उमापतिद्विवेदी

अयं गोरखपुरे चैत्रशुक्लद्वितीयायां जातः। अयमेव नकछेदरामशर्मा। अस्य जन्म १९१० विक्रमाब्दे जातम्। अस्य पिता हरिदत्तशर्मा काशीमागतस्ततोऽयं काशीवासी जातः। अस्य कुञ्जरनाथः पितामहो लघुभ्राता रुद्रदत्तः पुत्रश्च हरिदत्तः। अयं प्रसिद्धो विद्वान् योध्याधिपतेर्दर्शनामाह्वस्य समय आसीत्। निम्नलिखितेन श्लोकेन तस्य ग्रन्था: सूच्यन्ते—

नागेशशेखरजटे काव्यं नारायणं व्यधात्।
धर्माद्धारश्च यस्तस्य चित्रमेतदुमापतेः॥

अनेन १९०४ विक्रमाब्दे आषाढशुक्लाष्टम्यां शरीरत्यागः कृतः। सनातनधर्मोद्धारग्रन्थावलोकनेनास्य प्रकृष्टं पाण्डित्यं प्रकटितम्भवति। अस्य रचनेदृशी—

ईशार्द्धं धृतसोमार्द्धं सोमं सोमार्द्धमद्वयम्।
उमामद्धं चिदानन्दमजसोपास्महे महः॥

ऐशीं श्रियं विष्णुपदाब्जगेहां देहावनद्धां सुलभां विमुक्तिम्।
त्रिवर्गसर्ग भवभोगिभाग्यं निराकृति काञ्चन नौमि देवीम्॥

क्वाल्पाशयोऽहं व्यवसायशून्यः, क्व मन्थनं क्षीरधिमन्थनाभम्।
श्रमः भृशं किन्तु जयत्वयं मे, शिवाङ्घ्रिपद्मार्चनमन्दराद्रिः॥

कान्यकुब्जप्रकाशिकायां लिखितमस्ति यत् सरयूपारीणा ब्राह्मणाः कान्यकुब्जब्राह्मणेभ्यः एवागताः, यथा...

'अन्तर्वेदात्समानीय कान्यकुब्जकुलान् दश।
षोडशान् बालकान् दिव्यान् दीक्षासंस्कारवर्जितान्॥

उमापतिद्विवेदेन नारायणकाव्ये अयं विषय इत्थं वर्णितः——

श्रीरामचन्द्रो भगवान् पुराश्वमेधे शतक्रोशसमायताङ्गीम्।
सर्वस्वदत्तोऽपि भुवं तदर्द्धं ददौ वृतेभ्यो विधिवद् द्विजेभ्यः॥

प्राग्ग्रामरेखा सरितोऽथपश्चाम्बुजाह्वनादद्रिवरादवाक् च ।
उदक् सरुवा विषयोयमस्ति लोके महातीर्थमिव प्रसिद्धः ॥
श्रीकान्यकुब्जाद् द्विजराजभूया विप्राः सुनीता जगदीश्वरेण ।
स्त्वां कलङ्कञ्च विना विरेजुर्वै देश्च वंशैः सकलैस्तपोभिः
सम्पन्नसत्वाश्च तमो ववाधे सुदूरनिष्ठाश्च रजो जगाधे ।
क्षांस्तत्र वात्सल्यतया पुपोष लक्ष्मीस्तदीयैश्च गुणैस्तुतोष ॥
विप्रा इहान्येऽपि परे च वर्णा अद्यापि तद्वंशपरम्परासु ।
पादोनकोटित्रयसम्मितासु समास्वतीतास्वपि नूतनासु ॥

## विशुद्धानन्दस्वामी

सातापुरप्रान्तस्य बाड़ीग्रामवासी कान्यकुब्जब्राह्मणः पङ्कमलालशुक्लो हैदराबादं जगाम । तत्रस्थबादशाहस्य सेना० पतेल रमोरामस्य भगिन्या सहास्य विवाहो जातः । अनयोर्व० शीधरनामा पुत्रो बभूव । अस्य प्रथमाक्षराणि मदीयं पुस्तकं कथ० यतीति । ११ वर्षावस्थायां गंगासागरे कस्यचिन्महात्मनोऽन्ति० के तत्पुस्तकमुपलब्धम् । तदा महात्मनाक्तमयं मदीयो गुरुः । अथ मृते पितर्ययं मातुलेन रक्षितः षोडशवर्षावस्थायां युवको यथा मल्लकर्मादिषु निरतो बभूव । एकस्मिन् दिने विरक्तोऽयं नाशिकं गत्वा वेदाध्ययनं चकार । ततः काश्यां निखिलशास्त्रा० णामध्ययनं कृत्वा १९१६ विक्रमाब्दे गौड़स्वामिनः सन्यासं ज० ग्राह, विद्यार्थिपाठनमारब्धवान् । अयं काश्यां दशाश्वमेधघट्टे वसतिस्म । अस्यैव शिष्याः सन्ति म० म० पं० शिवकुमारशास्त्रि, पं० दुःखभञ्जनकवि, पं० हरिनाथशास्त्रि (मनीषानन्दस्वामि), म० म० पं० प्रमथनाथभट्टाचार्य, कविराजोमाचरणवैद्य, अ० नन्तरामशास्त्रि, व्याख्यानवाचस्पति पं० दीनदयालुशर्मादयो विद्वांसः । स्वामिमहाराजानां दर्शनाय वहुषु कालेषु अष्टादशतो ऽधिका महाराजा एकत्रीभूताः कालपतन्नृपाणां, तालुकेदाराणां, धनिकानां वश्यानाञ्च तु कथैव का ? कर्याचन्मा० कृत्वामिनां

सेषु त्रिलक्षतोऽधिका मुद्रा विद्वत्स्वर्पिताः स्वामिमहाराजेन। अ-
यं स्वसमयस्याद्वितीयो विद्वान् वदान्यश्चाभूत्। अस्य विषय-
ऽनेक ग्रन्था अनेकभाषासु प्रकाशिताः सन्ति। श्रूयते दुर्गाकुण्ड-
स्थिते अमठानृतरानन्दाद्याने असन वह आर्यसमाजप्रवर्त्तक-
स्य श्रीस्वामिदयानन्दस्य शास्त्रार्थो यत्र स पराजित इति।

अस्य शरीरत्यागो १९५६ विक्रमाब्दे ६३ वर्षावस्था-
या काश्यां बभूव। इदानीमस्य नामाश्रित्य भारते बहूनि धर्म-
सम्बन्धीनि कार्याणि भवन्ति। अस्य विषये म० म० पं० प्रम-
थनाथभट्टाचार्यो विजयप्रकाशे स्वामिसम्बन्धिकाव्ये वदति—

संसारं परिहाय यः स्वकृपया संसारिणां सर्वत-
स्त्राणाय प्रयतः प्रसादितजगत्कीर्त्या महत्त्वेन च।
श्रा विश्यात् स सदा सदर्कविभवः शास्त्रार्थरत्नाकरः,
श्रीलश्रीयतिवृन्दवन्दितविशुद्धानन्दरूपो हरिः॥

काश्यामहल्याबाईघट्टस्थित श्रीविशुद्धानन्दमहाविद्यालये
स्थित्वा कदाचित् ७-८ वर्ष यावन्मयाप्यधीतम्। अस्मत्समये
तत्स्थानाधीश्वर आसीत् श्रीमहादेवानन्दसरस्वतीति। पूज्यश्री-
स्वामिविशुद्धानन्दमहाराजस्य सम्बन्धे मयाऽप्ययं श्लोको ग्रथि-
तोऽध्ययनसमये—

जगज्ज्वालाजालज्वलितजनवातापशमनाद्,
दयानिन्दध्वान्तप्रसरहरणादाप्तसुयशाः।
कृता वाराणस्यां विमलवपुषः शास्त्रनिवहा,
विशुद्धानन्दाख्यः परमगुरुवः कोऽपि जयति॥

## निरञ्जनानन्दः

पंजाबप्रान्तीयकरतारपुरप्रान्तगते गंगापुरनामके
ग्रामेऽयमुत्पन्नः। अस्य पिता नारायणदासः सारस्वतब्राह्मणः।

अयं ५ वर्षावस्थायां शीतलाक्रमणेन हीननेत्रो बभूव । नारायणशास्त्रिणस्तथा तत्पत्नी च द्वादशवर्षीयममुं विसृज्य परलोकं गतौ । भ्रातृपत्न्याऽस्मै क्लेशो दत्तोऽतो हरिद्वारे पूर्णानन्दनः संन्यासं जग्राह । पितुरन्तिके सारस्वतचन्द्रिकेऽनेनाधीते, हरिद्वारे सिद्धान्तकौमुदी, काश्यामन्ये ग्रन्थाः । अथ १८९३ विक्रमाब्दे मथुरायामेका पाठशाला स्थापिता यस्यां स्वामिदयानन्देन शिक्षा प्राप्ता । अयं ७५ वर्षावस्थायां १९२६ विक्रमाब्दे शरीरं तत्याज ।

## श्रीकृष्णवल्लभः

अयं १८५५ विक्रमाब्द आसीत । अस्य पिता श्रीधर इति तत्कृतकाव्यभूषणशतकावलोकनात् प्रतीयते ।

विद्वद्वृन्दकमौलिभूषणलसत्पाण्डित्यलीलाञ्चित-
श्रीमच्छ्रीधरभट्टसूनुरमलप्रज्ञाधराराधितः ।
भट्टश्रीयुतकृष्णवल्लभसुधीर्वर्षे शरेभत्वगभू—
माने काव्यविभूषणाभिधमिदं काव्यं व्यधादद्भुतम् ॥

अस्य रचनेदृशी—

आकाशमानसविगाहनराजहंसं, नारीजनग्रहिलतानलिनीमहेभम् ।
आघ्रायमानरतिनायकसम्प्रदायदीक्षागुरुं दृशि निवेशय सुन्दरीन्दुम् ॥

कुसुमविशिखप्राजापत्यक्रतुयुवतीजना-
न्तरकरणभूमानग्रन्थेर्विमोचनकार्मणम् ।
नवरतिकलानाट्यप्रस्तावनाकुसुमाञ्जलिः,
कुमुदसुहृदो देवस्यासावुदेति रुचां चयः ॥

## जयगोपालतर्कालङ्कारः ।

अयं १८३५ ईसाब्दे कलकत्तासंस्कृतकालेजस्य प्रधानाध्यापक आसीत् । अधुनैवैकदा लार्डमेकालेसाहब इमं कालेजं समूलमुन्मूलयितुं गवर्नर—जनरल—विलियम—वेण्टिङ्गमहोदयं प्रेरितवांस्तदाऽनेन महामहोपाध्यायेन होरेश-होम्योनविल्सनसाहबस्यान्तिके एकः श्लोकः प्रेषितो येन स रक्षितः कालेजः । श्लोकोऽयम्—

अस्मिन् संस्कृतपाठसद्मसरसि त्वत्स्थापिता ये सुधी—
हंसाः कालवशेन पक्षरहिता दूरं गते ते त्वयि ॥
तत्तीरे निवसन्ति संहितशरा व्याधास्तदुच्छित्तये ।
तेभ्यस्तान् यदि पासि पालक ! तदा कीर्तिश्चिरं स्थास्यति ॥

अस्योत्तरमित्थं विलसनो दत्तवान्—

विधाता विश्वनिर्माता हंसास्तत्प्रियवाहनाः ।
अतः प्रियतरत्वेन रक्षिष्यति स एव तान् ॥

## गङ्गाधरशास्त्री

अयं महाविद्वान् काश्याः कनिष्ठिकायां परिगणनीयेऽवासीद् विद्वत्सु । अनेन गवर्नमेन्टान्महामहोपाध्याय, सी० आई० ई० इति पदवीद्वयमाप्तम् । अस्य शिष्येष्वनेके भारतदिग्गजपण्डिता आसन् सन्ति च । अनेन सूक्तिसुधानाम्नी संस्कृतमासिकपत्रिका चालिता १९६१ विक्रमाब्दे । अस्यामस्यानेकाः कृतयः प्रकाशिताः । अस्य रचनेदृशी—

कलिव्यालोद्गीर्णातुलकलुषहालाहलकृता—
विलङ्घ्या पर्यन्तप्रलयजनिमूर्च्छाभ्रमहरः ।
श्रयन् शैले नीले श्रुतिशततनुतो जङ्गलिकताम् ,
जगन्नाथस्वामी मम मनसि मोहं शमयतु ॥

## बापूदेवशास्त्री

अस्य पितामहः चिन्तामणिदेवः कौंकणप्रदेशं परित्यज्य रत्नागिरीमण्डलस्य वेलणेश्वरनामकं ग्राममाजगाम । ततोऽपि गोदावरीतटवर्त्यहमदनगरस्य टौंकमाट । अस्यैवास्य प्रपौत्रः सदाशिवस्य पौत्रः सीतारामदेवस्य पुत्रः १८१९ ईसाब्दे नृसिंहदेवनाम बभूव । अयमेव बापूदेवशास्त्रीतिनाम्ना प्रख्यातः । आदौ पितुरन्तिक एव १६ वर्षावधि शिक्षामधिगत्य नागपुरं पुनरागत्य दुण्ढराजशास्त्रिणो गणितशास्त्राध्ययनमारेभे ।

१८४० ईसाब्दे सीहोरस्य पोलीटिकल एजेण्ट विल्किन्सन साहवेनास्य ख्यातिः श्रुता तत्रस्थपाठशालायां व्यक्तगणिताध्यापनाय नियुक्तः । अस्मिन्नेव समये पं० सेवारामात्सिद्धान्तग्रन्थानां पठनमारब्धवान । अथैते विल्किन्सनसाहवेनास्यस्य सहायता पदार्थविज्ञानाध्ययने कृता । एतायमुक्तसाहवस्यैव योगेन काशीक्विन्स कालिजे प्राकृतिकविज्ञानगणिताध्यापने १८४२ ईसाब्दे नियुक्तः । काश्यां षड्दर्शनानां तथांग्रेजीभाषायाः शिक्षाऽनेन प्राप्ता ।

१८५० ईसाब्दे मेकलौडसाहवः काशी कलेक्टरो बभूव । तदाज्ञया बापूदेवशास्त्रिणा हिन्दीबीजगणितस्य रचनाऽकारि यस्य पुरस्कारे लोकलगवर्नमेन्टात् द्विसहस्रमुद्राः प्राप्तवान् । अस्य द्वितीयसंस्करणप्रकाशनावसरे लेफ्टिनेन्टगवर्नरेण म्यूरसाहवेनैकसहस्रमुद्रा अस्मै अर्पिताः । अयं लन्दनस्य रायल एसियाटिक सोसाइट्याः, बङ्गस्य एसियाटिक सोसाइट्यास्तथा कलकत्ताप्रयागविश्वविद्यालयसीनेटयोः सदस्य आसीत् । अयं

गवर्नमेन्टेन महामहोपाध्याय, सी० आई० ई० उपाधिभ्यां सम्मानितः। १८७३ ईसाब्दे काश्मीरनरेशस्य सविधे सूर्यग्रहणसमयं प्रेषितवान् यश्च यथोक्तो जातोऽतो नृपतिनाऽयमेकसहस्रमुद्राभिः सम्मानितः। काश्या वर्तमानः पञ्चक्रोशीयात्रामार्गोऽनेनैव संशोधितः। अस्यैव शिष्यो महामहोपाध्याय पं० सुधाकरद्विवेदी। अयं परमसज्जन आसीत्। अस्य पञ्चाङ्गोऽधुनाऽपि चलति। अयं १८८९ ईसाब्दे काशीकिवन्सकालेजतोऽवकाशं जग्राह। पुत्रद्वयमेकां कन्यां च विसृज्य १८६ ईसाब्दे परलोकमयं प्राप्तवान्। अनेनैकमतुलनानामकं यन्त्रं रचितम्। अस्य ग्रन्था इमे प्रसिद्धाः—

विचित्रप्रश्नसंग्रहः, २ तत्त्वविवेकपरीक्षा, ३ ज्योतिषाचार्याशयः, ३ मानवादः, ४ फलितविचारः, ५ मानमन्दिरवर्णनम्, ६ सूर्यसिद्धान्तटिप्पणी च।

## बालशास्त्री

अस्य पिता रानाडे गोविन्दभट्टो माता च काशीबाई। अयं १८६६ विक्रमाब्दे काश्यां अस्सीघट्टे जातः। यदायं पञ्चवार्षिक आसीत् तदैवैनं पिता रामकृष्णदीक्षिताय मित्राय समर्प्य परलोकं गतवान्। दीक्षितेनास्मै वेदाध्यापनं समारब्धम्। अयं स्वल्पेनैव वेदान् कण्ठस्थान् कृत्वा ब्रह्मावर्ते पेशवाबाजीरावाय श्रावितवान्। तुष्टः पेशवा बालसरस्वतीत्युपाधिना द्रव्यैश्चामुं सम्मानितवान् चित्रकूटे पेशवाविनायकरावेनापि सम्मानितः। अथायं मात्रा सह ग्वालियरं जगाम। तत्रत्येन चोक्तजस्टिपकुप्पाशास्त्रिणाऽस्य जीविकाप्रबन्धः कृतोऽध्याकरणदर्शनाद्यध्ययनार्थं प्रोत्साहितो पाठशास्त्रिबापटाद् व्याकरणं,

ऽदानीं ग्वालियर एव वर्तमानात् पूनावासिनो मोरेशास्त्रिणो मीमांसामधिगतवान् । इदानीमयं १६ वर्षस्यासीत् अथ ग्वालियरस्य सामुद्रिकपण्डितेन बच्चाशास्त्रिणाऽस्मै स्वकीया कन्या विवाहिता । अथायं काशीमाजगाम ।

काश्यां राजारामशास्त्रिणः शिष्यो बभूव । ततोऽवशिष्टानुत्कृष्टान् ग्रन्थानधीत्य १९१९ विक्रमाब्दे काशीक्विन्सकालिजस्याध्यापकोऽभूत । अस्य शिष्येषु म० म० पं० शिवकुमारशास्त्रि, म० म० पं० गङ्गाधरशास्त्री सी० आई० ई०, म० म० पं० ता तय शास्त्रि, म० म० पं० दामोदरशास्त्रिप्रभृतयो बभूवुः । मण्डानरेशोऽस्य शिष्यतामाप्य धनसहायकोऽभूत् । अयं विष्णुदीक्षितनामकं दत्तकं विसृज्य १९३९ विक्रमाब्दे परलोकं गतवान् ।

## हर्षनाथशर्मा

मिथिलाप्रान्तस्य शारदा[illegible]ऽयं जातः श्रोत्रियो ब्राह्मणः । अनेनादौ गोपालठक्कुरतो व्या[illegible]रणमधीत्य काश्यां बालशास्त्रि राजारामशास्त्रिणोः सकाशाद् विवेचनादिकमधीतम् । अयं दरभङ्गाधिपतेलक्ष्मीश्वरसिंहस्य सभ्यः अस्यैका कन्या महामहोपाध्याय डा० गङ्गानाथ झा- डी० लिट्- महोदयस्य पुत्रेण ऋद्धिनाथेन सह विवाहिता । अस्य ग्रन्था इमे परिभाषार्थदीपकः, मनोरमाभावदीपकः, संस्कारदीपकः, चातुश्चरणपद्धतिः, श्रीकृष्णप्रतिष्ठा, गीतगोपीपतिटीका, उषाहरणनाटकम्, सिद्धाश्रमलीला, श्रीसरस्वतीस्तुतिश्च । अनेन ५४ वर्षावस्थायां शरीरं त्यक्तम् ।

अस्य रचनेदृशी—

शीतादिवमानः कुमुदस्य बन्धुः कुन्दप्रसूनप्रतिमांशुरेवः ।
तथापि चन्द्रस्तनुदाहकारी, स एष हन्त्वान ततान्तभावः ॥
स्वर्भानुदष्टोऽपि जहाति नासून् वियोगिनां प्राणहरः सुधांशुः ।
वितर्कयामि स्फुटमत्र तेन, यमोऽपि दुष्टाश्चितरां बिभेति ॥

## गिरिजाशंकरः

अयं १९१२ विक्रमाब्देऽहमदाबादे बभूव । अस्य पिता लक्ष्मीशङ्करो माता च यमुना । अयं द्वादशवर्षाण्यहमदाबाद एवाधीत्य बडौदाराजकीयविद्यालये च काशीमाजगाम । तत्र महामहोपाध्याय पं॰ गङ्गाधरशास्त्रि सी॰ आई॰ ई॰ महोदयात् शब्दरत्नमनोरमात आरभ्य महाभाष्यपर्यन्त व्याकरणमधीतवान् । अथ महामहोपाध्याय पं॰ राममिश्रात सर्वदर्शनान्यधीत्य विशिष्टाद्वैतवेदान्तं सम्यक् पपाठ । अनन्तरमहमदाबादस्य स्वामिनारायणसंस्कृतपाठशालायाः प्रधानाध्यापकपदमानीतनमलञ्चकार । गुर्जरदेशे, सौराष्ट्रे चास्यानेके विद्वांसः शिष्या अध्यापन्ति । अयं परमसज्जन आसीत् । संस्कृतपत्राय प्रसमग्रहणकालेऽनेन मदीया महती सहायताऽकारि । एवमयं संरक्षकेषु परिगण्यते स्म । यद्यप्यस्य कश्चिद् ग्रन्थो नास्ति स्वामिनारायणकथाऽनेनावश्यमेव लिखिता । अहमदाबादे वर्णाश्रमस्वराज्यसङ्घाधिवेशनं जातमनेन विद्वत्परिषदः सभापत्यामलंकृतम् । शारदापीठस्य श्रीशङ्कराचार्यशान्त्यानन्देन विद्यावाचस्पतिः, संस्कृतकार्याजयेन च संस्कृतमणिः इत्युपाधिरस्मै प्रदत्तः । अस्यानेका रचना संस्कृतपत्रे प्रकाशिताः सन्ति । अनेन १९९४ विक्रमाब्दे ज्येष्ठशुक्लसप्तमीदिने शरीरत्यागोऽकारि ।

## माधवकवीन्द्रः ।

अयं राजपूतानान्तर्गत विजयपुराज्यस्य छिवग्रामे १९०७ विक्रमाब्दे जातः । अस्य पिता रामबक्शो माता च ञयकुमारी । अनेन जयपुरस्य संस्कृतकालेजे शिक्षाऽधिगता । अयं कासल्योगारुयो दाधीचब्राह्मणः । अस्मिन् शीघ्रकवित्व-शक्तिरासीत् । अयं सभायां वदतिस्म—“अमुष्यां सभायां ममैषा प्रतिज्ञा भुजङ्गप्रयातैर्विना वाक् न वाच्या”।

अस्य मुक्तिलहरीनामकं पुस्तकं प्रसिद्धं वर्तते । इयं पण्डितैः सह वार्ताकरणसमये ईदृशानि पद्यानि प्रायो वदति स्म-

“अस्मिन् विद्वत्सदसि मया वाग् लाविन-वृत्तैर्वक्तव्या ।
कस्मिन् शास्त्रे भवदीया गतिरास्ते प्रकटीवर्तव्या ॥
व्याकरणेऽस्मिन्, बहवो ग्रन्थाः सन्ति पुराणा अपि नव्याः ।
अष्टाध्यायी पाणिनि-चिता तत्र नु वार्ताः प्रष्टव्याः ॥

अस्य शरीरपातो १९८२ विक्रमाब्देऽभूत् । अयमन्तिमे समये जोधपुरराजधान्यां वर्त्तितस्म ।

## मनीषानन्दः ।

अयं काशीवासी । अस्य प्राचीनं नाम हरिनाथशास्त्री पिता च विश्वनाथः। अयं सरयूपारीणो ब्राह्मणः । अयं भावानन्दात् सन्यासं जग्राह । तत एव मनीषानन्दनामा बभूव । अनेन १९६० विक्रमाब्दे ७६ वयोवस्थायां काश्यामेव शरीरत्यागोऽकारि । यतीन्द्रचरितामृतमहोदधि, दायभाग, अशौचनिर्णयादयोऽनेकेऽस्य ग्रन्था विद्यन्ते । अस्य शिष्या अनेके काश्यामधुनाऽध्यापयन्ति । अस्य रचनेदृशी—

अस्मै सर्वमभीष्टं स्याद् यः स्वरूपेण भासते
अनात्मप्रतियोगीशो भासतां सर्वहृद्ग्रयम् ॥
संसाररत्नाकरदुर्निवारनारीजनावर्त्तविघूर्णमानाम् ।
क्रोधादिग्राहोगणवक्त्रदंष्ट्रागृहीततत्ताम्निजयोगभागान् ॥
निमज्जतीं चुद्रतरीं मदीयां हा ! हा !! शरण्याम्नितबाल्यकीर्तेः
लोकोत्तराचारतपःप्रभावाद् विचित्रविद्याधरकर्णधारात् ॥
अनाथदेहाद्धरणैकहेतोर्गृहीतकाशीस्थसुपूज्यमूर्तेः ।
श्रीविश्वनाथाद् गुरुपूज्यतातात्, कोऽन्यो भवेत्तारयितुं समर्थः ॥

## देवीप्रसादशुक्लः ।

अस्य पिता महाकविर्दुःखभञ्जनो, माता च रामरतिः । अयं वदति—माता रामरतिर्यस्य पिता श्रीदुःखभञ्जनः । सोऽयं देवीप्रसादाख्यः कविर्विजयते तराम् ॥ अस्य पूर्वजा असनीवासिन आसन् किन्त्वस्य जन्म १६०४ तमे वैक्रमाब्दे पौषकृष्णद्वितीयादिने जातम् । अमुं षड्वर्षवयस्कमत्र हित्वा पिता कैलाशवासमकरोत् । श्रूयते मरणसमयेऽस्मै दुःखभञ्जन अन्तामणिमन्त्रं दत्तवान्, यस्य प्रभावादयं शिवनारायणत्रिपाठिनारिणस्तथा पाण्डेयवरश्रीदामोदरगोस्वामिनः सन्निधौ सर्वविधात्कष्टप्रस्थानां वाचनञ्चकार । अयं १६ वर्षावस्थायां कान्यकुब्जपाठशालायां स्वपितुः स्थाने साहित्याध्यापकोऽभूत् । अयमासीत् सर्वशास्त्रेष्वप्रतिहमतिः किन्तु स्वसमये समस्तसंसारे साहित्यस्याद्वितीयोऽध्यापकः प्रख्यातः । अयं स्वविज्ञतायाः परमाऽभिमानी कस्यचिदप्यपेक्षां न करोति स्म । अस्य कथनमासीत्—

श्रीदुःखभञ्जनकवीन्द्रतनूजनुश्रीदेवीप्रसादसुकवेः कवितामवेत्य ।
नन्दन्ति चेत्सुकृतिनः कृतिनः कृतिज्ञा निन्दन्तु तत्कुमतयो नहि कापि हानि

अयं कान्यकुब्जब्राह्मणः शुक्लतावटङ्को महाशाक्त आर्मीचल्क्तिसूत्रकर्तृभरद्वाजगोत्रः । विविधग्रन्थनिर्माणेऽप्ययम् अस्मद्गुरुः कविचक्रवर्तीत्याख्यया विख्यात आसीत् । अनेन १९८८ विक्रमाब्दे चैत्रे शरीरत्यागोऽकारि । अस्य रचनेदृशी—

वाहं तेऽमुं यथाऽहं भ्यर्चयिषमसृणं घूर्णमानं मदेन ।
त्वामत्येत्र हनिष्याम्यबुध ! यदि पुराऽऽरावकान् बाधसे मे ॥
इत्युद्धं कृतान्तं महिषवधविनिर्णयाजतः शिक्षयन्ती
बाद्या शक्तिः प्रबुद्धा त्रिभुवनजननी मङ्गलं नस्तनोतु ॥

सुभगा शुभगा यत्र साधुसाधनसङ्गता ।
समत सोऽयमायातो होलिकाह्वो महामहः ॥

वसन्तलिङ्गेन सुसङ्गता सती, विकासयन्ती नवचूतकोरकम् ।
कृतार्थयन्ती मुदितं मनोभवं, सुखेन रासं वितनोति होलिका ॥

कमलानाद् बहलयन निविरानन्दभरस्य ।
माधव एव तनोति नो प्रीतिं कस्य जनस्य ॥

## दुर्गाप्रसादद्विवेद ।

अस्य पिता सरजूप्रसादद्विवेदः । अनेन फैजाबाद प्रान्तवर्तिनि पण्डितपुरे जन्म गृहीतम् । अयं जयपुरीयराजकीयसंस्कृतकालेजे प्रधानाध्यापक आसीत् । सर्वशास्त्रेष्वस्यासीत् प्रकृष्टं पाण्डित्यम् । अस्य योग्यतया तुष्टेन गवर्नमेंटेन महामहोपाध्यायपदमर्पितमस्मै । अस्य ग्रन्थेषु 'चातुर्वर्ण्यशिक्षा' नामकः परमप्रसिद्धः । साहित्यदर्पणस्य भूमिकाऽनेन प्रकृष्टपाण्डित्ययुक्ताऽलेखि । अयमासीन्महाशाक्तः । अनेन ८० वर्षावस्थायां १९९५ विक्रमाब्दे आषाढमासे शरीरत्यागः कृतः । अस्य रचनेदृशी—

पादौ धरित्री, कटिरन्तरिक्षं यस्याः शिरो द्यौर्हरितागमेषु ।
अन्यद् यथायोगमयोगदूरा सा चन्द्रघण्टा घटयत्वभीष्टम् ॥
ईश्वराड् विराट् संसृतिराडखण्डब्रह्माण्डभाण्डाकलनैकवीरा ।
पापानि छिन्द्याद्वनसद्रुमकूष्माण्डाऽव्यादपायादभयदानशौण्डा ॥
द्वैमातुरत्वे द्विरदाननस्य षाण्मातुरत्वे च कुमारकस्य ।
एकैव माता परमा मता या सा स्कन्दमाता मुदमादधातु ॥
कालीकृतं श्रीकृतमप्यगारं, कृष्णाद्युपास्या प्रथमं यतश्च ।
साऽनन्तविद्या विततावदाना गौरी विदध्यादखिलान् पुमर्थान् ॥

## उमाचरणभट्टाचार्यः ।

अयं बङ्गदेशीयः श्यामविशुद्धानन्दस्यापि शिष्यः । प्रथमायुर्वेदस्य भारतमान्य आसीद्विद्वान् । अयं हिन्दुविश्वविद्यालय आयुर्वेदविभागस्याध्यक्ष आसीत् । आयुर्वेदशास्त्रस्य महापण्डितोऽप्ययं दर्शनशास्त्रस्याप्यासीन्महाविद्वान् । दिल्ल्यामखिलभारतीयायुर्वेदसम्मेलनस्याध्यक्षपदमनेनाऽलङ्कृतम् । अस्यानेके शिष्या अधुनापि सन्ति । मयाऽप्यस्यान्तिके आयुर्वेदशास्त्राऽधिगतम् । अयं कविराज उमाचरणभट्टाचार्यनाम्ना प्रख्यातः कविरत्नमासीत् । अस्य कृतिः—उमाचरणचरितेन, उमाचरणधीमता । यदुमाचारणादाप्तं तदुमाचरणोऽर्जितम् । अनेन १९८५ विक्रमाब्दे ६५ वर्षावस्थायां शरीरत्यागोऽकारि ।

## धर्मदासः ।

काश्यामयं दशाश्वमेधघट्टे वसतिस्म । अस्य गणना प्रसिद्धवैद्येष्वासीत् अयं कविराजोमाचरणभट्टाचार्यस्य स्थाने हिन्दुविश्वविद्यालयायुर्वेदविभागाध्यक्ष आसीत् । अयं चरकाचार्यः कथ्यते स्म । अस्य शरीरपातो १९९२ विक्रमाब्दे आश्विनशुक्ले जातः ७४ वर्षावस्थायाम् ।

## देवकुमारी

राजस्थानीया इयममरसिंहस्य पत्नी, संग्रामसिंहस्य च माता। अनया वैद्यनाथस्तोत्रं व्यरचि यदधुनापि शिलोत्कीर्णमुक्तमन्दिरे लभ्यते। इयं ख्रि-तस्याष्टादशे शतके अभूत्।

## वीणाबाई

इयं मण्डलीकनृपतेः कन्या, महिषी च हरसिंहनृपतेः ख्रिस्तस्याष्टादशे शतके बभूव। एतत्कृतं द्वारकापत्तलं नाम धार्मिको ग्रन्थः संस्कृतेन लिखितो गुर्जरप्रान्ते लभ्यते। इयं गौर्जरी।

## प्राणमञ्जरी

तन्त्रशास्त्राभिज्ञेषु प्रेमनिधिर्नाम प्रसिद्धम्। एतत्पत्न्या नाम प्राणमञ्जरीति। इयं ख्रिस्तस्याष्टादशे शतके बभूव। अनया निर्मिता साम्प्रतमपि तन्त्रराजस्य सुदर्शननाम्नी प्रथमपटले टीका मुद्रितोपलभ्यते। श्रूयते सुदर्शननामा तस्य पुत्रो यदा कालकवलितोऽभूत्तदेयं तन्नाम्नः स्थैर्याय तां टीकामलिखत्। तन्त्रराजस्य प्रथमः श्लोकोऽनया पञ्चधा व्याख्यातः। तन्त्रराजटीकाकाराणां मनोरमाकर-सुभगनाथादीनां मतानि सम्यक् पर्यालोच्य स्तोयमन्यतान्त्रिकानामप्यालोचनञ्चकार एतेनास्यास्तन्त्रपाण्डित्यं प्रकृष्टं परिज्ञायते, परमधुना तत्कृता सम्पूर्णतन्त्रराजस्य टीका न लभ्यते।

## ज्ञानसुन्दरी

ख्रिस्तस्याष्टादशशतकान्ते कुम्भकोणक्षेत्रे ज्ञानसुन्दरी अभूत्। इयं श्रीवत्सगोत्रीयस्य कुप्पुस्वामिनः शिष्या। अस्याः साहित्ये, सङ्गीते, नृत्ये च असाधारणं पाण्डित्यमाक-

वर्ण्यते, तदनुरूपमेव सौन्दर्यञ्च । इयं प्रतिदिनं भगवतो रङ्गनाथस्य मन्दिरे स्वकलाः प्रदर्शयति स्म । एतस्या यश आकर्ण्याऽऽकारयत् मैसूरमहाराजः । तेनेयमाहूता । तत्रेयमास्थानविद्वत्पदं न प्राप । इयमेव प्रथमा अन्तिमा च स्त्री, या 'आस्थान' विद्वत्सम्मानमधिगतवती । अस्या अधोऽङ्किताः संस्कृतग्रन्थाः प्रकाशिताः—

१—तल्लिनगरापतिभुजङ्गाष्टकम्
२—वैमनस्यनिष्कासनाष्टकम्
३—हालास्यचम्पूः

अन्तिमा कृतिरुत्तमतरा, यस्यां भगवत्या मीनाक्ष्या सह भगवतः सुन्दरेशस्य षड्भिः स्तबकैर्विवाहो वर्णितः । एतत्कृतमधोऽङ्कितं पद्यद्वयम्——

मधुरीकृतनगरत्वान्मधुराभिख्यया तदादि सा नगरी ।
निजसीमस्थफणित्वाद्विभाति हालास्यनामतश्चेह ॥
तस्या लज्जाप्रलीनस्वाहापतिरेव शान्तसन्तापः ।
रेजे कुङ्कुमतिलकव्याजान्नूनं बुधा इह कालबिन्दुः ॥

## नारायणशास्त्री

अस्य पिता ईश्वरदीक्षितो माता च लक्ष्मीः । अयं २८-५७ ईसवीयाब्दे ईश्वरनामनि सम्वत्सरे कन्यामासे जनिं लेभे आत्रेयगोत्रायां दक्षिणदेशीयशिरःपुरी(त्रिचनापल्ली)प्रान्तान्तर्गत कवेरीतटवर्त्तिकरूरतालुकग्रामे नृसिंहपुरीतिप्राचीनाभिधाने । अयं कुम्भघोणनगरीयराजकीयविद्यालयं समुद्रपालयं देशाञ्चालयन् श्रीकाञ्चीकामकोटिपीठनाधिष्ठितानां श्रीशङ्कराचार्यमहाराजानां सन्निधौ धर्मशास्त्रपरीक्षकः अभवत् । एतत्कृतं 'रामवर्मामृतम्' काव्यमस्ति । अस्य रचनैतादृशी—

लोकानन्दकरामचन्द्रनृपतिश्रीलाभतोषातुले
साकेते परमातुरा जयतु सा क्रोधोद्धुरा मन्थरा ।
सङ्घर्षादुदितो यदीयहृदये क्रोधाग्निरिद्धः क्रमा—
दक्षोराजपुरीगृहेषु विपुलो जज्वाल कालान्तरे ॥
एकं तं कलये प्रभञ्जनतनःशाकं विशोकं हृदा,
रक्षोभञ्जनमञ्जनोदरसुधावाराशिराकाविधुम् ।
भक्त्यानञ्जनयैव यो रघुवरं चक्रे स्वहृत्पञ्जरे,
तुल्यो यस्य न विक्रमेऽपि जलधिर्येनापि कुल्यास्पदम् ॥
भास्वद्वंशजभूमिभृद्वरयशःसौधोल्लसत्केतवे,
बन्दीभूतवसुन्धरातनुजनिक्षेपैकसंकेतवे ।
लब्धाताखिलयातुधाननगरीदर्पौषदघ्यातवे,
तापत्राणनहेतवे तनुमतां तस्मै नमः सेतवे ॥
नृत्यत्तुङ्गतरङ्गताण्डवगलद्बिभ्रमदन्तावल -
दवेलाक्षोभितवाधिपत्तिरधिकस्फीतं च मौलं बलम् ।
झञ्झावात इवाशुगोऽतिगहनं रम्भावनं पातयन्
कान्तारेऽपि भाषणः कटुरुषा रामो रणे राजताम् ॥

## वेंकटमखिः

अयं दक्षिणभारते खिस्तस्य १७तमे शतकेऽजायत । मद्रपुरीसङ्गीतसभया प्रकाशिता एतत्कृता 'चतुर्दण्डीप्रकाशिका' इति नाम्नी अपूर्णापि महती गुणेन, गौरवेण च कृतिः । अयं कर्णाटकसङ्गीतस्य पाणिनिरुच्यते । अयं ग्रन्थः कर्णाटकसङ्गीतसम्बन्धी । अत्र वीणा, श्रुति स्वर, मेल, राग, आलाप, ठाय, (स्थायी) गीत, प्रबन्ध, तालत्याख्या दशप्रबन्धाः सन्ति ।

## श्रीनिवासाध्वरः

अयं ख्रिस्तस्याष्टादशे शतके चेन्नकेशवपुरे आसीत्। अस्य माता पार्वती, पिता च गङ्गाधराध्वरीन्द्रः। अयं श्रीवत्सकुले अभूत्। श्रीनिवासाध्वरिविरचिता तेप्पकुलात् प्रकाशिता 'आनन्दरङ्गविजयचम्पूः' इति।

इयमलेखि १७५२ ख्रिस्ताब्दे। अस्मिन् ग्रन्थे आनन्दपल्लई, दक्षिणभारत, कर्णाटकप्रान्तानां ख्रिस्तस्याष्टादशशतकात् पूर्वाद्धगत इतिहासः प्राप्यते। पिल्लईमहोदयः फ्रांसाधिष्ठितपाण्डिचेर्यां राज्यपालस्य डूप्लेक्सस्य परामर्शदाता, प्रधानलेखकश्चासीत्। अत्राष्टौ स्तबकाः सन्ति। चतुर्थस्तबकात् ज्ञायते यन्मद्रासस्य नामासीत् चेन्नकेशवपुरमिति चेन्नपट्टनमिति च।

## यदुनाथमिश्रः

अस्य पिता जयनाथशर्मा निवासस्थानं दरभङ्गामण्डलवर्तिलालगञ्जग्रामः। अयं १८८५ ख्रिस्ताब्दे सोदरपुराभिधे मैथिलश्रोत्रियब्राह्मणवंशे जनिं लेभे। अस्य गुरुः महामहोपाध्यायः प्राचीनसंस्कृतपत्रलेखकः श्रीलोकनाथशर्मा। यदुनाथशर्मा शब्दतर्कशास्त्रयोः प्रकृष्ट आसीद्विद्वान् इति १९१६ ख्रिस्ताब्दे त्रिहारसंस्कृतसमितिस्थ त्रयीभूतशास्त्रविचारपरिषदा पुरस्कृतस्य एतद्रचितस्य व्यञ्जनावादस्य निराकरणात् साधवगम्यते। अनेनास्वल्पे वयस्येव १ व्यञ्जनावादः २ समासशक्तिवादः ३ दपवाक्यरत्नाकरस्य गूढार्थदीपिकानाम्नी टीका च अलेखिषु समासशक्तिवादोऽपि मया दृष्टः। अयं १९२८ वत्सरे स्वशरीरमत्यजत्। समासशक्तिवादस्यादौ तस्यायं श्लोकः—

नत्वा वाचं परं तातं मातरञ्च गुरूनपि।
समासे शक्तिरेकेति परीक्ष्या स्थाप्यते मतम्॥

## अनिरुद्धाचार्यः ।

अयमासीन्नड़ियाईनिवासी वल्लभसम्प्रदायस्याचार्यः। विक्रमस्य १६९१ वर्षे अनेन जामनगरस्याप्याचार्यस्थानमधिगतमासीत्। अयं संस्कृतभाषायाः प्रकृष्टपण्डित आसीत्। अस्य संरक्षकतायां संस्कृतभाषायाः पीयूषपत्रिका मासिकी नड़ियादादेव प्रकाशिता भवतिस्म। अस्य काश्चिद्रचनाः संस्कृतेऽपि प्रकाशिताः सन्ति। अनेन गोपालतापिन्युपनिषदष्टीकाऽलेखि। अनेन ३५ वर्षावस्थायां शरीरं त्यक्तम्। अस्य रचनेदृशी—

मृत्स्नां खादसि! नो! वदन्त्यनुचराः! सर्वे मृषाऽशंसिनः।
सत्यस्त्वं यदि तात! पङ्कजमुखं, व्यादेहि तूर्णं तव॥
इत्थं मातुरनुज्ञया स्ववदने, योऽदर्शयल्लीलया
विश्वं विश्वमनोहरं सुखकरं तं बालकृष्णं भजे॥

लास्यं करिष्यसि यदैव तदैव देयं गव्यं मयेतिवचनैर्व्रजवासिनीभिः।
नर्तितः सकलवेश्मसु योऽद्वितीयस्तं बालकृष्णमनिशं मनसा स्मरामि॥
रात्रिर्गता मदनमोहन सुन्दरास्य! प्राणेश्वर प्रणयमन्दिर नन्दसूनो!!
सद्म व्रजामि प्रणमामि तवाङ्घ्रिपद्मं, तल्पं विमुञ्च परिमुञ्च ममाञ्चलञ्च॥
उच्चैर्वदामि यदि संशृणुयाद्धि लोकः, सारे कृते स्वनत नूपुरकङ्कणौ च॥
गेहे नु मे गुरुजनो ह्यनुमंस्यते किं निस्साधना रसिक! किं करवाणि मुक्त्यै॥
गोवृन्दमद्य चपलं भविता मदीयं नेत्रं मयापि विमलं यमुनाजलञ्च।
कार्यान्तरं रमण! मे निलयेऽस्ति चान्यदाज्ञां प्रदेहि गमनाय तवास्मि दास'

## लक्ष्मणशास्त्री ।

अयं काश्यां वसतिस्म। अनेन विदुषा स्वमातामहस्यान्तिके संस्कृतविद्याः सम्यगधीत्य परमं यशः समुपार्जितम्। अयं कलकत्ताविश्वविद्यालये दर्शनशास्त्राण्यध्यापयति स्म।

अस्य योग्यतया तुष्टेन गवर्नमेन्टेनास्मै महामहोपाध्यायपदव्यर्पिता। अयं सनातनधर्मस्य ह्रासमवलोक्य वर्णाश्रमस्वराज्यसंघस्य स्थापनञ्चकार, यस्मिन् भारतस्य धर्माचार्या, विद्वांसो, राजानो, धनिकाश्च सत्वरमेव सम्मिलिताः सनातनधर्मत्राणाय बद्धपरिकरा बभूवुः। काश्यामस्य संघस्य स्थापनावसरे या सभा जाताऽऽसीत् सा अस्याः शताब्द्याः स्मरणीयैका घटनैव वक्तुं शक्यते। अस्य प्रयत्नेन सनातनधर्मिसंसारे परा जागर्तिर्जाता या साम्प्रतमपि दृष्टिगोचरीक्रियते। भारतेऽनेके महापण्डिता अस्य शिष्या वर्तन्ते। अयं स्वसमयस्य महाविद्वान् धर्मप्राण एव कथनीयः। शारदाबिलस्य विरोधेऽनेन महामहोपाध्यायपदवी गवर्नमेन्टस्य नीत्याऽसन्तुष्टेन परित्यक्ता। अनेन १९८९ विक्रमाब्द आषाढ़मासे शरीरत्यागोऽकारि, सनातनधर्मस्य प्रचारं कुर्वता यात्रायामेव। अयमासीद् द्राविड़ब्राह्मणः। अनेन संस्कृतभाषायाः प्रचाराय ब्राह्मणसम्मेलनं नाम संस्कृतमासिकपत्रमपि प्रकटीकृतमासीत्। अस्य पुत्रः पण्डितराजो राजेश्वरशास्त्रीति।

## जगन्नाथशास्त्री।

अयं १९४४ विक्रमाब्दे कार्तिकशुक्लसप्तमीदिने बभूव। अस्य पिता परशुरामो भीतरा खेड़ावालब्राह्मणो लम्बकर्णगोत्र आश्वलायनशाखायामासीत्। अयं सूरते वसति स्म। अयमासीद् गायकवाड़स्य दक्षिणापरीक्षोत्तीर्णः। अयं कर्मकाण्डस्यासीद् प्रसिद्धो विद्वान्। अनेन लघुरुद्रपद्धति, विष्णुयागपद्धति, विवाहचन्द्रिका, श्राद्धकौमुदी, दुर्गाकल्पद्रुम, मन्त्रसारसमुच्चय, रुद्रकल्पद्रुम, शान्तिकल्पद्रुम, मुहूर्तसंग्रह, व्रतः

कल्पद्रुम, श्रौतोल्लास, प्रश्नदीपिका, आरतीकल्पद्रुमादीनामनेकग्रन्थानां लेखनं, सम्पादनं, प्रकाशनञ्च कृतम्। अयं १९८९ विक्रमाब्दे संस्कृतकार्यालयेन संस्कृतसूरीत्युपाधिना अलंकृतः। अनेन ४४ वर्षावस्थायां १९८८ विक्रमाब्द आश्विन कृष्णप्रतिपच्छनिवासरे शरीरत्यागोऽकारि।

## हाराणचन्द्रभट्टाचार्यः

अयं बङ्गीयराजशाहीमण्डलस्य बालुभराग्रामे १८९६ ख्रिस्ताब्दे मार्गशीर्षकृष्णामावास्यायां जनिं लेभे। अस्य पिता प्रसन्नचन्द्रः। अयं यदा १० वर्षाणामासीत् तदैव गृहे लग्नेन वह्निनाऽस्य सर्वः कुटुम्बो भस्मसादभूत्। अयमेकाकोऽथ काश्यामागत्य महामहोपाध्यायश्रीशिवकुमारमिश्रस्य निकटे स्थित्वा अध्ययनमारब्धवान्।

व्याकरणाचार्यपरीक्षोत्तरणानन्तरमयं काश्यां नगवापाठशालायां, ततः कलकत्तासंस्कृतमहाविद्यालये, ततः काशीहिन्दुविश्वविद्यालये; ततः जयपुरीयफतेहपुरस्थितशेखावाटीसंस्कृतमहाविद्यालये, ततः काशिकमारवाडीसंस्कृतमहाविद्यालये, ततः काशिकराजकीयसंस्कृतमहाविद्यालये २३-७-३४ ख्रिस्ताब्दे प्राध्यापको भूत्वा पुनः १९३७ तमे वर्षे कलकत्ताराजकीयसंस्कृतमहाविद्यालयमगच्छत्। तत्रैव १९४२ तमे वर्षे महामहोपाध्यायोपाधिना सम्मानितः। कलकत्तायामेव २७-६-४३ दिने शिवसायुज्यमाप।

अयं सर्वशास्त्राणामासीद् दुर्धर्षो विद्वान्, महाशास्त्रार्थनिपुणश्च। अनेन कालसिद्धान्तदर्शिनी नाम्नी लघ्वी अपि परमगभीरा पुस्तकी अलेखि यस्यां भूमिका म० म० गोपीना-

थ कविराज इति । अस्य शतशः शिष्याः सन्ति । एतत्सम्बन्धनी स्मर्यते कस्यचित्कृतिप्रशस्तिः—

शेषाशेषसदुक्तियुक्तिकुशलो यः साहितीतत्त्ववित्,
मीमांसानयसांख्यसाररसिको वेदान्तशान्तान्तरः ।
श्रौताचारपरम्पराप्रतिफलत्तेजोविशेषोज्ज्वलन्,
भट्टाचार्यपदान्वितो विजयते हाराणचन्द्रः सुधी ॥

## पुरुषोत्तमशर्मा

अयं १९१५ विक्रमाब्देऽधिकश्रावणशुक्लषष्ठी भृगुवासरे भरुचप्रान्तस्य दोराग्रामे बभूव । अस्य पिता नारायणशर्मा किन्तु करजणप्रान्तीयवणापुरवासिन्या नाथारामभट्टपत्न्या गोदावर्या स्वदत्तकत्वे नियुक्तोऽयम् । अनेन पेटलादनगरे प० मणिशङ्करशास्त्रिणः सकाशादधीत्य काव्यपुराणानीत्यादिन्यनेकाः परीक्षा उत्तीर्णीकृताः । अयमासीद् भरुचस्थ ऋषिनिवासाश्रमे प्रधानाध्यापकः । अनेन संस्कृतकार्यालयात् साहित्यसूरिपदव्यधिगता पेटलादेऽनेन सह मम साक्षात्कारो जात आसीत् । अनेन १९९२ विक्रमाब्दे आश्विनशुक्लपूर्णिमादिने शरीरत्यागोऽकारि । अस्य प्रायः सर्वा एवोत्तमाः कृतयः संस्कृते प्रकाशिताः सन्ति । अस्य रचनेदृशी—

क्व सिन्दुरं वा क्व च तस्य बिन्दुः क्व गर्हितं वा विधवाललाटम् ।
तथापि सूक्तं कविनाद्य केन, सिन्दूरबिन्दुर्विधवाललाटे ॥
यं ध्यानमार्गप्रवणेन चेतसा, योगीश्वरा मार्गयितुं न पारगाः ।
तद्दर्शनाह्लादनिमग्नचेतसां, किं वर्ण्यते दिष्टमहो व्रजौकसाम् ॥
कामं सुराः सन्तु सहस्रशोऽन्ये, वरप्रदाः शम्भुविरञ्चिमुख्याः ।
तथापि कृष्णात्परं मतिर्मे, न मानिनी स्वीकुरुते कदापि ॥

## चिन्नस्वामिशास्त्री

मद्रासप्रान्तीये मण्डकोलूरनामके ग्रामे ख्रिस्तस्य १८६० तमे वर्षे अयमुत्पन्नः। अस्य पिता अप्पाशास्त्री। स्वपितुरन्तिके कृष्णयजुर्वेदमधीत्य अथो चेन्नपुर्यां कुप्पुस्वामि—वेङ्कटसुब्बा-शास्त्रिभ्यां मीमांसाशास्त्रमधिजगे। उत्तरभारते लुप्तप्रायस्य मीमांसाशास्त्रस्य प्रचाराय काशिकहिन्दुविश्वविद्यालयेन प्र-धानाध्यापनाय आहूतः काश्यामभिनवकुमारिल इत्येन सम्मानितो म-हामित्रेष्वासीत्। अयं संस्कृतभाषाया राष्ट्रभाषात्वसमर्थकेषु अन्यतम इत्यखिलभारतीयदेशभाषापरिषदाध्यक्षमवहदेकदा। मीमांसाश्रौतकर्मकाण्डवेदादिविषयका अनेके ग्रन्था रचिता अ-नेन। काशीतः कलकत्तासंस्कृतविश्वविद्यालयमियाय। तत्रैव ६७ वर्षावस्थायां श्रावणशुक्लषष्ठ्यां पाञ्चभौतिकं तनुर्जहौ। काशिकहिन्दुविश्वविद्यालयाध्यापकः सुब्रह्मण्यशास्त्री कलकत्ता-संस्कृतविश्वविद्यालयाध्यापकः पट्टाभिरामशास्त्री, यश्चोत्तरभा-रते प्रधानो मीमांसको मन्यतेऽस्यैव शिष्योत्तमः।

## स्वामिदयानन्दः

अयं काशीभारतधर्ममहामण्डलजन्मदातुः स्वामिज्ञाना-नन्दस्य प्रधानः शिष्यः। अयमासीद् बङ्गदेशीयोऽनेकभाषा-पण्डितः अस्य धर्मकल्पद्रुमनामा ग्रन्थोऽस्याः शताब्द्या हिन्द्यां सर्वप्रधानो ग्रन्थः। अयं संस्कृतभाषायां यदा तदा लेखान् लि-खति स्म।

अयं स्वसमये सनातनधर्मस्य सर्वप्रधान आसीद् वक्ता। अस्य विज्ञानसम्भावित भाषणमाकर्ण्य नास्तिका अपि भवन्ति-आस्तिकाः। कानपुरे सनातनधर्मकालेजस्यानेन स्थापनम-कारि। अस्य ग्रन्था इमे—धर्मकल्पद्रुम, नवीनदृष्टिमे प्रवीण

भारत, प्रवीणदृष्टिमे नवीनभारत, भगवद्गीताटीकादयः सन्ति। अनेन १६९२ विक्रमाब्दे भाद्रे मासि शरीरत्यागोऽकारि।

## रामनाथचतुर्वेदः

अस्य पिता कुञ्जनलालचतुर्वेदो जुहोतियाब्राह्मणः अयं १६५३ विक्रमाब्दे भद्रशुक्लदशमीबुधवासरे जातः। अयं जालौनप्रान्तस्य कोंचनगरे वसति स्म। अत्रैव रुपनैलग्रामादागत्यास्य पूर्वजा वासमकार्षुः। अयं कोंचसंस्कृतपाठशालायां शिक्षामाप्य प्रधानाध्यापकोऽप्यभूत्। वुन्देलखण्डीयपञ्चाङ्गो महेश्वरनामा वहुकालादनेन प्रकाशितः। अस्यानेके शिष्याः पाठशालास्वध्यापयन्ति। अनेन संस्कृतकार्यालयात् काव्यसूरीत्युपाधिः प्राप्तः। अस्य पुस्तकानामियं सूची---रसमञ्जर्याः संस्कृतटीका, जुहोतियापरिचयः, गीतसंग्रहः, पद्यपेटिका, नवदुर्गास्तवः, । अयं संस्कृतपत्रस्य प्रसिद्धलेखक आसीत्। अनेन स्वल्प एव वयसि १९९१ विक्रमाब्दे शरीरं त्यक्तम्।

यदीयशरीरविभा प्रतिभाति विभाति विभाकरविम्बविभेव।
स भासुरभाधिपभूषितभाल इभास्य उदस्यतु विघ्नकुलानि ॥
श्रयतां विधातृविभवा श्रयतां विपदन्तकारि तव देवि ! पदम्।
शरणं करोमि तमसः शरणं कमले ! दयस्व मयि नैकमले ॥
विलेशयेशे शयितो जलाशये शयेषु शङ्खादियुतो रमाश्रयः।
प्रमूलमेतज्जगतां च यो वयं नमाम तत्पादकुशेशयद्वयम् ॥
अगम्यमहिमा हिमाभवसना, सनातनसुखाऽसुखातिदमनी।
मणीव विमला मलाहतिपरा परा सहृदया दयासु नयेत् ॥
प्रतिपलमहमर्थये समर्थाः गणपतिविष्णुकलत्रविष्णुवाणीः।
मुदितवुधजनस्य संस्कृतस्य भवतु शुभाय नवीनवर्षवेशः ॥

## विश्वेश्वरः

अस्य पिता लक्ष्मीधरपाण्डेयः अल्मोड़ामण्डलस्य पाटियाग्रामनिवासी । अयं काश्यामागत्य कोटिपार्थिवार्चनं कृत्वा विश्वेश्वरप्रसादादमुं विश्वेश्वरनामानं पुत्रं प्राप । अस्य जनिकालः १७६५ विक्रमाब्दः । अयं स्वपितुरन्तिके एव विद्याध्ययनमकरोत् । अनेन अधोलिखिता ग्रन्था लिखिताः—

१—वैयाकरणसिद्धान्तसुधानिधिः, २—दीधितिप्रवेशः, ३—तर्ककुतूहलम्, ४—अलङ्कारकौस्तुभः, ५—अलङ्कारप्रदीपः, ६—अलङ्कारमुक्तावली, ७—काव्यतिलकम्, ८—काव्यरत्नम्, ९—रसचन्द्रिका, १०—कवीन्द्रकर्णाभरणम्, ११—आर्यासप्तशती, १२—मन्दारमञ्जरी, १३—नैषधटीका, १४—रसमञ्जरीटीका, १५—नवमालिका नाटिका, १६, शृङ्गारमञ्जरीसट्टकम्, १७—रोमावलीशतकम्, १८—वक्षोजशतकम्, १९—होलिकाशतकम्,—२० लक्ष्मीविलासकाव्यमिति च । एतद्वचनाः—

जयति यथाजातानां वाग्जातसुजातपारिजातश्रीः ।
श्रीलक्ष्मीधरविबुधावतंसचरणाब्जरेणुकणाः ॥
विशङ्कलितैः परकीयैः पदार्थजातैः स्वकाव्यविन्यस्तैः ।
याचितकमण्डनैरिव न भवति शोभा विजातीया ॥

इत्थं प्रतीयते यद्विश्वेश्वरस्य लघुभ्राता उमापतिरपि साहित्यस्य प्रौढ़ आसीद्विद्वान् । अलङ्कारकौस्तुभस्य परिकरालङ्कारप्रकरणे स तद्विषये लिखति—'तेन विशिष्यविशेषणोभयसाभिप्रायत्वेऽपि परिकर एवेति त्वस्माकं यविष्ठभ्रातुः उमापतेः पक्ष इत्यलम्भूयसा' इति । विश्वेश्वरस्य पुत्रो जयन्तकृष्णोऽपि विद्वानासीदिति रसमञ्जरीटीकायाः प्रतिलिपिप्रकु-

वैतस्तस्याधोऽङ्किताभ्यां वाक्यश्लोकाभ्यां ज्ञायते 'ग्रन्थकृत्पुत्रो जयकृष्णो व्यलिखेदं पुस्तकम्'

दिग्गुणतु शशलाञ्छनयुक्ते शालिवाहनशके जयकृष्णः ।
श्रावणीयसितपक्षदशम्यां निर्मितिं पितुरिमां विलिलेख ॥

## रामस्वामिशास्त्री

अयं रुक्माङ्गदचम्पूकर्ता । रुक्माङ्गदचम्पूप्रकाशकोऽत्रां संस्कृतकार्यालयः । अयं लालगुडीनिवासी । लालगुडी दक्षिणभारतस्य त्रिचनापल्लीमण्डलान्तर्गता । तत्र प्रवृद्धश्रीमत्याह्वा अम्बिका विराजते योक्तचम्पूकर्तुः कुलदेवता । रुक्माङ्गदचम्पौ लेखको लिखति सन्ध्यावलीवर्णने 'लालगुडी नगरीव प्रवृद्ध श्रीमत्युपेता' इति । किं बहुना स्वपुत्रीष्वेकस्या नामापि स प्रवृद्धश्रीमतीत्यकरोत् । अयं खिस्तस्याष्टादशे शतके अभूदिति प्रवृद्धश्रीमत्याः पुत्रः चित्रनापल्लीमण्डलान्तर्गतवोगैयुग्रामवासी आ० रा० मलैयप्पः कथयति संस्कृतकार्यालयमुपेतः । रामस्वामिशास्त्रिणः कविता:—

विप्रः कश्चिदजामिलाह्वययुतो जायां विहायानघां
शूद्रीमभ्युदपादयद्दशसुतांस्तस्यामघस्यालयः ।
ह्यन्त्ये समये भयात्स्वपतृपतेश्चारान्स नारायणे-
त्याक्रश्याल्स्फुटवर्णमन्तिमसुतं पश्चात्सद्माऽगमत् ॥
काऽप्यन्यः प्रदारगारपि चित्रमध्यापि विद्याधरा-
ख्यो विप्रः परलोकगो स्मरवधूकल्पे स्वतल्पे शुचा ।
स्मारं स्मारमतां सतीं सुयुवतीमुन्मादवन्मानसो,
रामा मे क गतेत्युदीर्य सततं भूपाल ! प्रापाऽमृतम् ॥

